# श्रीमन्महाराज संस्कृत महापाठशाला पत्रिका

## त्रैमासिकी

सम्पुटम् ३ ]　　जनवरि १९२७.　　[ सञ्चिका १

सम्पादकः

महामहोपाध्यायः

पण्डितरत्नम् लक्ष्मीपुरं श्रीनिवासाचार्यः.




मैसूरु

राजकीय शाखामुद्रालये सम्मुद्रिता

१९२७

॥ श्री ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

# विषयसूचना





## विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम —संस्कृतविद्याभिमानिन पुरुषप्रवराः य कचन विषयमधिकृत्य संस्कृतभाषामय अनतिसक्षिप्तविस्तर उपक्रमोपसहारपरिकर्मित कस्याप्यनुद्वेगकर अचर्चितपूर्व कालदेशदशानुगुणं प्रपञ्चोपकारकर धर्माद्यविरुद्ध जीर्णमङ्गे सुभाषितम्'' इति निर्वेदस्य वीरा वाचैव केवलम्' इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यास विलिख्य यदि प्रेषयेयुर्महान्त, तेभ्यो महद्भ्य समर्प्य अनन्तान धन्यवादान् पत्रिकायामस्यां तमुपन्यास पारयामः प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवनन त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषुं दान च मधुरा च वाक् ॥

संपादकस्य.

---

## मूल्यप्रकारः

१ अस्या पत्रिकाया वार्षिक अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम् (भारतमण्डले)
२ विद्यार्थिनां पुन एकरूप्यकम
३ विभिन्नदेशे सपादरूप्यद्वयम् (3 s) प्रापणभृति पृथक्.

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यंगार्,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः मैसूरु.

## विशेष विज्ञापना.

अस्या श्रीमन्महाराजसंस्कृतमहापाठशाला पत्रिकायां पञ्चाशत्संवत्सरमहोत्सवप्रदीपिकाया प्रकाशिताया आस्माकीनकृते दर्शनमीमांसाभिधानाया तृतीये मामरस्योपायप्रकरणे परिदृश्यमाना —

मायावादमसच्छास्त्र प्रच्छन्न बौद्धमुच्यते ।
सर्वस्य जगतोऽप्यस्य मोहनार्थं कलौ युगे ॥
वेदार्थवन्महाशास्त्र मायया यदवैदिकम् ।
मयैव रक्ष्यते देवि जगता नाशकारणात् ॥

इत्यादयः श्लोका पद्मपुराणे स्थिता इति विज्ञानभिक्षुणा साङ्ख्यप्रवचनभाष्ये समुदाहृता इत्यनूद्य प्रत्युक्ता ॥

पुनरपि विमर्शे एते श्लोका प्राचीनपुराणपुस्तकप्वपरिदर्शनात्, आनन्दाश्रममुद्रापितेऽपि पद्मपुराणकोशे प्रक्षिप्तत्वसूचनाय कुण्डलीकरणात्, श्रीमद्रामानुजाचार्य—श्रीमन्मध्वाचार्यप्रमुखैराचार्यैरनुदाहरणाच्च प्राक्षिप्ता एवेत्यत्र नैव काचिद्विमति महतामिवास्माकमपि ॥

अपिचास्मिन्नेव पुराणे अद्वैतप्रशमापराः श्लोकास्समुपलभ्यन्ते ।

यथा—

योऽन्तरात्मा पर ब्रह्म स विज्ञेयो महेश्वर ।
तदेवाक्षरमद्वैत तथा नित्य पर पदम् ॥
नान्य देव महादेवात् व्यतिरिक्त प्रपश्यति ।
तमेवात्मानमन्वेति यस्स याति पर पदम् ॥
मन्यन्ते ये स्वमात्मान विभिन्न परमेश्वरात् ।
न ते पश्यन्ति त देवं वृथा तेषां परिश्रम ॥ इति ॥

तथा—विष्णुपुराणे तृतीयेंशे --

परमार्थस्तु भूपाल सक्षेपात् श्रूयता मम ।
एको व्यापी समश्शुद्धो निर्गुण. प्रकृते परः ॥

जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ।
परज्ञानमयोऽसद्भि नामजात्यादिभिर्विभु ॥
न योगवान्न युक्तोऽभूत् नैव पार्थिव योक्ष्यते ।
तस्यात्मपरदेहेषु सतोऽप्येकमय हि यत् ॥
विज्ञान परमार्थोऽसौ .. ।
वेणुरन्ध्रविभेदेन भेद षड्जादिसज्ञित ॥
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मन' ॥ इति च ॥

एभिरपि मायावादेत्याद्विदूषणपराणा श्लोकाना प्रक्षिप्तत्व सुदृढीकृत भवतीति पुनरेकवार प्रकाशयाम ॥

किचास्या एव सचिकाश्च चतुर्दशाधिकद्विशततमे पुटे —
सांख्यसौगतभाट्टानां सकराच्छकरोदय ।
गुर्वक्षपात्पाञ्चरात्रसग्रहाल्लक्ष्मणोदय ॥

इत्याद्यस्मत्कृतश्लोकलेखनमपि वाचकमहाशयाना हृदय व्याकुलयतीति कैश्चित्सुहृद्भि प्रतिबोधिता भृश विषीदाम ॥

विज्ञापयामश्च आस्तिकमहाशयेषु कस्याप्यनुद्वेगकरवचनलेखन-पथेन सचरितव्यमस्या पत्रिकायामिति समीचीनमुद्देश पुरस्कुर्वाणा वयं प्रकृतं लेखन महाजनानामुद्वेग जनयतीति विज्ञाय भृश च व्याकुलीभूय पुनरेतादृशलेखनमस्यां पत्रिकाया न प्रकाशयाम इति प्रबुद्धा एव भविष्याम । प्रकृतेन च लेखनेन संजातस्य अद्वैतिमहाजनमनः कालुष्यस्य प्रशान्तये क्षमामपि प्रार्थयामहे ॥ इति ॥

लक्ष्मीपुर श्रीनिवासाचार्यः.

## स्वविषयः

अयि महाशया ! इदमिदानीं प्रथममवधारणीयम्—यदस्याः पत्रिकापुत्रिकाया द्वितीयोऽप्यब्दपूर्त्युत्सव जनन्या पाठशालायाः पञ्चाशत्संवत्सरपूर्त्युत्सवेन साकं सरम्भेण निर्वर्तित इति ॥

यच्चैषा खलु पाठशाला तनयास्थानीयामिमां पत्रिकां द्विवर्षदेशीयामप्यप्राप्तां वरणीयस्य प्रियतमस्य महाराजस्य हस्ते स्वस्या महोत्सवसमये महोत्सवप्रदीपिकेति नाम चाधाय समर्प्य सुपात्रनिक्षेपनिराकुलमानसा बभूवेति ॥

सोऽपि महाराज सर्वेषां न प्रत्यक्ष स्वीकृत्य प्रत्यशृणोत् श्रवणमात्रेण सहृदयानां रोमाञ्चोदञ्चनकारणं वसुदेवनन्दनवदनारविन्दपवित्रीकृतं ' योगक्षेमं वहाम्यहम् '' इति महान्तं मन्त्राणामुत्तमं मन्त्रं पाणिग्रहणकालिकप्रतिज्ञामन्त्रपाठं पठन्निव । य एष नाम सन्निवेशः महाभागानां सर्वेषां पुन पुनरनुस्मरणेन स्थायीभवति स्वादुतामानीयमान. विगलितवेद्यान्तर शान्तो रसविशेष ॥

एतादृशमहाभागाया पत्रिकाया तृतीयेऽपि वर्षारम्भे विनयभारावनतेन हृदयेन वय भगवन्त तमेव वासुदेवमसकृत्प्रणिपत्य अभिनन्द्य च भूयोभिर्धन्यवादै शुभमयहृदयान् पत्रिकायाः ग्राहकाननुग्राहकांश्च महोदारान् सकल्पिते कर्मणि प्रवर्तामहे ॥

आशास्महे च ते महात्मान निरवद्यपथप्रस्थिताया सज्जनचित्तविनोदनतत्पराया अस्या पत्रिकाया अभ्युन्नतये अपरापरवत्सरवत् इहापि केवलया करुणया प्रयतेरन् महत्कुर्वीरन्निति च ॥

पत्रिकायामस्या प्रतिपाद्या विषया उद्देश्यविशेषा सम्पत्तिपरिकराश्च द्वितीयवर्षारम्भ एव समूचिता इति न पुनराम्रेडनेन पाठकमहाशयानामवसरमपजिहीर्षामः । पर तु पत्रिकाप्रकाशकाना अवर्जनीयाः अतिसुलभा विपुला. स्खलितविशेषा मर्षणीया एव भवितुमर्हन्ति साधुत्वैकान्तस्वान्तैरित्युक्तिश्शतशोऽपि नातिशयोक्तिः ॥

ग्राहकमहाभागसंख्या वत्सराद्वत्सरमभिवर्धमाना पञ्चशतीमतीत्य भवततिमिमंश सामोदमावेदयितु प्रभवोऽपि '' श्रेयसा केन तृप्यते ''

इति लोकदर्शनमनुरुध्य प्रार्थिताभिनवाधिकग्राहकसंख्याका एव सदा भवाम इति नेदमाश्चर्यस्थानम् । ये तु महाभागाः स्वीयाभिः पत्रिकाभिरस्याः पत्रिकाया विनिमयेन ग्रहीतारो भवन्ति तेषामपि संख्या अभिवृद्धिदशायां वर्तन्ते इति प्रकटनपत्रेषु शक्यते विज्ञातुम् ॥

## निदानम्

विशेषविज्ञापनाया निदानमिदानीं प्रकाशयामः—यदस्यां प्रकाशिताया दर्शनमीमांसायां "मायावादम्" इत्यादिश्लोकानुवदनं, यच्च तत्प्रतिवचनस्य विस्तरेणाकरणं, यदपि 'सांख्यसौगत" इत्यादिश्लोकेन सौगतसामीप्यकथनं, एतत्त्रयमद्वैतसिद्धान्तबद्धादराणां वाचकमहाशयानां मनःकालुष्यं जनयतीत्यस्मत्पाठशालायां स्थिताः केपि सुहृदः प्रत्यक्षमस्मान् प्राबोधयन् ॥

सर्वदर्शनसामरस्यैकदत्तचित्तानां आभिनिवेशलेशाविधुराणामपि प्रबन्धप्रणेतॄणां, क्षमाप्रार्थनाभारवहनायैव कुशलीकृतमस्तकानां पत्रिकासंपादकानां च एतादृशास्सुलभसमाधानवचना आक्षेपा अवर्जनीया एवेति विज्ञाय समाधानं पुरः प्रसरत्पत्रिकायां प्रदर्शयिष्याम इति "संधिमिच्छन्ति माधव" इतिन्यायेन प्रत्यज्ञासिस्म । तदनुरोधेनैवेदानीं तेषामेव महतां मतमविगीतमनुसृत्य समाधानपरिपाटीं प्राकाशयाम। नेतः परमधिकमस्माकं सौभाग्यमस्ति—

येन केनाप्युपायेन यस्य कस्यापि देहिनः ।
संतोषं जनयेत्प्राज्ञस्तदेवेश्वरपूजनम् ॥

इति सिद्धान्तमनुसरतां महाजनमनोविनोदनैकप्रयोजनपत्रिकासंपादनधुरामुद्वहताम् यदबहुधनायासेन कतिपयसुभाषितलेखनमात्रेण बहवो महाजनास्तुष्यन्तो भवन्तीति ॥

अपिच २य संपुटे ३य संचिकायां ४र्थे पङ्क्तौ "अपरोऽतिमादावहा" इति पठितव्यमित्यायसाक्षरसंकलनप्रमादं परिशोधयामः ॥

इति सर्वमनाकुलम्, संपादकः.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा



कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः

(ईशोपनिषत्)

संपुट-३] जनवरि १९२७ [सञ्चिका-१.

अपूर्वं यद्वस्तु प्रथयति विना कारणकलां
जगद्ग्रावप्रख्यं निजरसभरात् सारयति च ।
क्रमात् प्रख्योपाख्याप्रसरसुभगं भासयति तत्
सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयताम् ॥

## संस्कृतभाषाविषयः प्रबन्धः.

तत्रादौ भाषास्वरूपम्—

सृष्टेऽस्मिन्प्राणिवर्गे जगदधिपतिना मानवोऽसौ प्रशस्तः
व्यापारा अप्युदाराः पटिमगुणजुषामिन्द्रियाणाममुष्य ।
वाग्व्यापारस्तु तत्राप्यनुपमसुषमामावहत्यस्य पुंसः
सोऽयं भाषा हि नाम स्वहृदयसमभिव्यञ्जनाय प्रयुक्तः ॥ १

भाषाभेदनिरूपणपुरस्सरं संस्कृतभाषायाः पूर्वं सर्वत्र प्रचारप्रपञ्चः---

भाषेयं शास्त्ररीत्या जगति बहुविधा संस्कृता प्राकृतोदी-
च्यावन्ती च श्रवन्ती द्रमिडविषयगीर्बाह्लिकेत्यादिभेदैः ।
भाषास्वेतासु पूर्वं भरतभुवि गिरस्संस्कृतायाः अनादेः
प्रायः सर्वत्र देशेऽभवदधिकतया निर्विशङ्कः प्रचारः ॥ २

संस्कृतभाषायाः प्राचीनत्वसमर्थनम्—

वेदा एव पुरातनाः प्रथमतस्ते देवभाषात्मका
नैभ्यः प्राक्तनमस्ति पुस्तमवनौ भाषान्तरालङ्कृतम् ।
वाचोऽन्याः परमार्थतस्तु कथिता गीर्वाणभाषोद्भवा
तस्मात् सैव पुरातनी त्रिदशगीः भाषान्तराणां प्रसूः ॥ ३

वेदभाषायाः लौकिकसंस्कृतभाषातो भेदकथनपुरस्सरं संस्कृतपदनि-
रुक्तिः—

जगति महता कालेनाभूदतीव पुरातनात्
निगमवचसो भूयान् भेदस्तु संस्कृतभाषणे ।
तदनु मुनिभिस्तत्तन्निर्धारणे पदलक्षणं
व्यरचि सुरगीस्तस्मादेवेत्यभूद्भुवि संस्कृता ॥ ४

संस्कृतभाषायाः प्राकृतभाषोत्पत्तौ, प्राकृतभाषायाः इतरलौकिकभाषोत्पत्तौ
च कारणत्वप्रदर्शनम्—

भाषैवोच्चरिता सतीयमधमैरस्पष्टमुच्चावचैः
यत्किंचिद्विकृता प्रचारबहुळा जाता स्वयं प्राकृता ।
तस्मादेव यथायथं च कविभिस्साऽप्यादृता नाटके-
ष्वन्यासामपि सैव लौकिकगिरामुत्पत्तिभूः प्राकृता ॥ ५

अथ त्रिभि श्लोकै पूर्वं सर्वत्र संस्कृतभाषाया एव प्राधान्यं हेतुभि· समर्थ्यते—

पुरा किल महर्षयस्सकलशास्त्रपारङ्गता
प्रणीय सुरभाषया विविधदर्शनानि स्वयम् ।
जगद्धितचिकीर्षया जनिततुष्टि सारस्वत
रसायनमनारत ववृषुरातुराप्यायनम् ॥ ६

महात्मानो मान्यास्तदनु मनुमान्धातृजनक-
प्रवेका प्रख्याता क्षितिभृत इमे भारतभुवि ।
कृतीनां कर्तारस्समजनिषत प्राक् स्वयमतो
बभूवे गीर्वाणोक्त्यमृतलतया कन्दलितया ॥ ७

श्रीमद्विक्रमभोजराजमहिता श्रीकालिदासादय
काव्यैस्स्वैर्विविधैर्व्यधु. कुसुमिता गीर्वाणभाषालताम् ।
इत्थ सन्मुनिभि· कलासु कुशलै· भूपैस्तदुत्साहितैः
विद्वद्भिश्च समुन्नतेरमरगी कोटिं परां प्रापिता ॥ ८

अथ कालक्रमेण तस्या अपचयः पञ्चभिः पद्यै· प्रदर्श्यते—

अत्युन्नतिः पतनहेतुरिति प्रवादः
सत्यस्तदाऽजनि विधेर्नियमात् खलेषु ।
म्लेच्छेषु राजसु सुपर्वगिरा यदेको-
च्छ्वासावशिष्टनिजजीवितया जिजीवे ॥ ९

घज्नीमहम्मद महम्मदगोरि तैमूर्-
लङ्गादयश्च बहवः प्रभवस्तुरुष्काः ।

देवालयेष्वतुलकाञ्चनरत्नकान्ति-
प्रद्योतितेषु परिपूर्णमहोत्सवेषु ।। १०

अन्त प्रविश्य परिचैर्वृत निर्विशङ्क
निर्भिद्य विग्रहकुलानि मनोहराणि ।
काम प्रगृह्य कनकादि धन प्रभूत-
मुद्वेगमार्तिजनक बहुशो वितनु ।। ११

न केवलमिद धन विविधरत्नहेमात्मक
प्रणाशमभजत्तरामपि तु देवभाषामयम् ।
कलाधनमगात् क्षय भरतखण्डसर्वस्वमि-
त्यय हृदयशूलवत्सपदि मर्म न· कृन्तति ।। १२

स्वयमधिजैत्रयात्रमवनौ यवनास्त इमे
तुरगकुलत्यपाचनविधौ बहुशास्त्रयुतम् ।
सुरुचिरताळपत्रमयकोशमनेकविध
तृणमिव भस्मसादकृषतेति वयं शृणुम· ।। १३

एवमपचितायास्संस्कृतविद्याया आश्रयबलादधुना पुनरुज्जीवनम्—

इत्थं क्लेशैर्यवनजनितैर्मूर्छिता निष्प्रचाराऽ-
प्यायुश्शेषाद्भरतजगतीभागधेयाच्च भूय· ।
उज्जीवन्ती सदयहृदयै पोष्यमाणा प्रयत्नात्
क्षोणीपालैरियममरगीरद्य कार्श्यं जहाति ।। १४

अथ त्रिभि· संस्कृतभाषाया· प्राशस्त्य प्रदर्श्यते—

समय इह समन्ताद्भूयसीनां प्रचारः
प्रसरति भुवि वाचा यद्यपि प्राकृतानाम् ।

तदपि विबुधभाषैवार्हतीयं प्रशस्तिं
सुगुणमभिलषन्तस्तत्र सन्तः प्रमाणम् ॥ १५

वेदा वेदान्तशास्त्रं दुरवगममलङ्कारशास्त्रं पुराणं
मीमांसा योगसांख्यं फणिपतिवचनं न्यायशास्त्रं निबन्धः ।
ज्योतिश्शिल्पं च वैद्यं भरतमुनिमतं मन्त्रशास्त्रं च काव्यं
विद्याशब्देन वाच्यं जगति सुरगिरैवोक्तमस्तीह सर्वम् ॥ १६

तत्तादृग्रसभावगर्भितचमत्कारप्रधानध्वनि-
व्यङ्ग्यालङ्कृतिरीतिपाकविलसत्सौंदर्यमन्यादृशम् ।
माधुर्यं क्व नु वाऽस्त्यनीदृशगुणे भाषान्तरे कोविदाः
सत्यं ब्रूत गुणैकलोलुपधियो बद्धाञ्जलिः प्रार्थये ॥ १७

इत्थं भाषां प्रस्तूय संस्कृतविद्याभिवृद्ध्याशंसनपूर्वकं प्रकृतविषयमुपसं-
हरति—

बहुभिरिह किमुक्तैः पिष्टपेषस्वरूपैः
नियतमखिलभाषामातृभूता स्मृता या ।
अनुदिनमभिवृद्ध्या भारती भास्वतीयं
जयतु चिरमिहैतद्देशदेशान्तरेषु ॥ १८

जि. वेङ्कटनरसिंहशास्त्री,
गुम्मघट्ट.

## महिशूरदेशाभ्युदयो नाम चम्पूप्रबन्धः.

(२ स ३ सञ्चिका १५२ तमपुटात् )

### अर्थान्तरोल्लासः.

अथ प्रभाताया शर्वर्यां समुत्थितौ निर्वर्तितस्नानसन्ध्यावन्दनाद्यनुष्ठानौ परस्परोपमितौ गोविन्दसूरिश्रीनिवासकवी समिळितौ अनेकानि सरसवचनान्यन्योन्य सलपन्तौ सुखेन कचित्कालमनयताम् ॥

ततस्तयोर्गोविन्दसूरौ श्रीनिवासकविं प्रति सखे' सम्प्रति यद्यवशिष्यते वक्तव्य महिशूरदेशाभ्युदय उच्यताम् श्रोतुमतीवोत्कण्ठितोस्मीत्युक्तवति स सखे' भूयानवशिष्यते वक्तव्यस्तद्विचारः यदितादृश्युत्कण्ठा तवावेदयाम्यवधीयतामित्येववक्तुमुपचक्रमे—

विजयते खलु यथा विख्यातेषु मुम्बयिचेन्नपत्तनादिषु देशान्तरेषु तथाप्यत्रापि कश्चिद्विश्वविद्यानिलय

अस्मद्देशप्रभूता कलितवसतयो दूरदेशान्तरेषु
क्लेशान् सोढ्वा पठन्त्युत्तरितुमभिमतप्रौढविद्यापरीक्षाः ।
एषा क्लेशस्स मा भूत्सुखमिह पठन्त्वित्यतिप्रेमतोस्म-
त्कृपालो विश्वविद्यानिलयमिह मुदाऽस्थापयद्राजधान्याम् ॥ १

तत्साधनायात्र कल्याणनगर्यां च प्रौढमहापाठशाला प्रतिष्ठाप्य विश्वविद्यापाठने समुचितमासवेतनलाभसतुष्टान् शास्त्रनिष्णातान् अतिसमर्थान् उपाध्यायान् नियम्य आवश्यकानि विविधान्युपकरणानि

परिकल्प्य आवश्यकान् हृद्यान् बहून् प्रासादांश्च निर्माप्य तत्तत्परीक्षक-पाठ्यप्रबन्धादिनिर्णायकसभा आरचय्य तन्निर्णयनदक्षान् विचक्षणान् बहून् सदस्यांश्च नियोज्य सकलकार्यनिर्वाहोचित किमप्युद्योगस्थान-मत्र सस्थाप्य तत्कार्यदर्शिनोऽनेकान् तारतम्यानुमार्गेण नियाय विख्यात कंचन लब्धवर्ण अधिकारिवरेण्य तत्स्थानाध्यक्षपदवीमारोप्य तदातदा शास्त्रनिष्णातताना विख्याताना पण्डितवर्याणा सदुपन्यासैर्विद्यार्थिनां विशेषत विज्ञानमुत्पाद्य अद्यापि बहुधा प्रोत्साहमातनुते। अतएव—

सकलकलानिलयेऽस्मिन् कलितास्म्यकला कला इहेद्धतमा।
अभ्यस्यन्ते बालैर्गृहे वा कल्याणनाम्नि नगरे वा ॥ २

किंच—

निर्वृत्ते नवरात्ररम्यविभवे कस्मिंश्चिदिष्टे दिने
मुख्यामात्यमुखाधिकारिषु निजक्षत्रेषु विद्वत्सु च।
देशीयेषु च सयुतेषु परित श्रीमान् जगन्मोहन-
प्रासादे समलकरोति हि महाराजश्शुभाग्रासनम् ॥ ३

तदा किल—

ये येऽनल्प परीक्षाजलधिमुदतरन् भूरिविज्ञाननावा
तांस्तानाहूय बालानतिरसुलभां तत्र दत्त्वा प्रशस्तिम्।
तेभ्यस्तत्कालवाच्य विविधमपि हित सादर बोधयित्वा
कृत्वानन्दाब्धिमग्नान् प्रकटयति परा स्वानुरक्तिं क्षितीन्द्र ॥

अन्यच्च—

कीर्तिज्योत्स्नाप्रसरविशदीभूतादिक्चक्रवाल
कृष्णक्षोणीपतिमणिरसावीदृशे सन्निवेशे।
वाराणस्यामपि बहुमतो विश्वविद्यानिवेशे
श्रीमानग्र्य शुभपदमलकर्तुमभ्यर्थ्यते स्म ॥ ५

विद्याप्रचारस्तु अस्मिन् जनपदे विशेषतो विजृम्भते । तथाहि—

ग्रामेग्रामे पाठशालाऽनुकूला सर्वे बालाः पाठलेखातिलोला ।
विद्या हृद्या श्रीमहीशूरदेशे नित्यं मूर्तेवात्र सर्वत्र भाति ॥ ६

सन्ति चात्राकलितपरीक्षोत्तीर्णोपाध्यायपाठनशिक्षणविधाना नानाविधा. महापाठशाला अत्र । बालिका अपि विद्यामभ्यस्य सम्यगभिवर्धन्ते उच्चतरपरीक्षाकक्ष्योपशोभिता महाराज्ञीबालिकामहापाठशालाऽत्र काचिद्विजयते तन्महापाठशालानदीकुल्यायमाना शालाश्च बह्व्यो वर्तन्ते । उच्चतरपरीक्षोत्तीर्णा बह्व्यो महिळा केषुचित्स्वतन्त्राधिकारेषु नियुक्ताश्च विद्यन्ते सामान्यतस्सर्वेऽपि वर्णा विद्यानिबद्धादराः प्रावीण्यं सपाद्य नानाभ्युदयपारम्परीं लभन्ते ॥

अपिच महाप्रभो करुणाकटाक्षप्रसारेण हीनवर्णा अपि बहुधा साहाय्यमुपलभमाना विद्यामभ्यस्यन्ति । अनभ्यस्तविद्यस्तु न कोप्यत्र लभ्यते । यत —

अविज्ञातविद्याविचारा विमूढा
प्रजास्सन्तिचेद्यत्रकुत्रापि काश्चित् ।
हितैस्ताः प्रबोध्यातिनिर्बन्धतो वा
तदीयांस्तनूजानिहाध्यापयन्ति ॥ ७

अतोऽत्रदेशे विद्याशला अगणनीया एव । तथाहि—

नद्यास्तीरे प्रवृद्ध कथमपि गणयेत्सूक्ष्मधीः सैकतं वा
तारास्तारापथे वा ननु परिगणयेच्छ्रूयतामत्रतावत् ।
विद्याशाला विशाला विविधविषयतो विश्वतो भासमाना
यावत्यस्सन्ति सर्वा अपि विगणयितुं तावतीः कस्समर्थः ॥ ८

तद्भारतीमाकर्ण्य गोविन्दसूरिरेवमवदत्—अये किमेवमाभाषसे अविचाररमणीय ते भाषणम् । यत —

मुख्योऽत्र यस्तिष्ठति सर्वविद्या-
शालाधिकारी महिशूरदेशे ।
शालाः कियत्यस्त्विति चेत्सपृष्ट
इयत्य एवेति वदत्यवेहि ॥ ९

ततश्श्रीनिवासकविरेवमवादीन् सखे ' न तथा केवलराजकीया. विद्याशाला. कतीति यदि पृच्छ्यते तदा इयत्य इति ब्रूयात् इतराश्च विद्याशाला अगणिता एव विद्यन्ते. तास्सर्वा अपि कथं निर्णीय वदेत् अतो मे वचन अन्यथा न मन्यस्व तदास्ताम् ॥

किंच अत्र खलु राजधान्या महाराजेन क्षत्रकुमाराणामशनवसननिवसनविद्याभ्यासनानुकूला पितु. श्रीचामाराजेन्द्रस्य नामाङ्कनेन प्रतिष्ठापिता काचिद्विद्याशाला विजयते । न केवल सा, सुधृतपूर्वं महिशूरमहाराज्यभारायाः सुगृहीतनामधेयायाः विलसन्त्या. मातुर्वाणीविलासाम्बायाश्च नामाङ्कनेन प्रतिष्ठापिता तादृश्येव क्षत्रकुमारीजनानुकूला च विद्याशालाऽतिहृद्या विद्यते ॥

किंच तच्छ्रुतमेव भवता यदत्र निखिलजनपदवलयविख्याता, कर्णाटराज्यलक्ष्मीशिरोवतसभूता. सरससाहितीवेदवेदान्ताद्यखिलशास्त्रपाठप्रवचनविलसिता, अचिरपरिकल्पितै रमणीयै विद्यार्थिजनानुकूलै विशालैर्वासभवनै परिशोभिता, उच्चनरवेतनसमानितमहोपाध्यायाध्यापनातिहृष्टाऽनेकशिष्यजनोपलक्षिता सम्स्कृतविद्याभिवर्धनबद्धादरस्य संमानितवैदिकविद्वन्मण्डलस्य महाप्रभो कृष्णराजेन्द्रस्य करुणाकटाक्षविभ-

वेन परिपोषिता विनयावनतास्तिकविद्यार्थिजनप्रसादैकपरायणश्रीसरस्वतीप्रासादभूता सरस्वतीप्रासादाभिधाना महापाठशाला भूयोभिवृद्धिं गता विजयत इति। इदमन्यदप्यवधीयताम्——

सत्योत्साहाद्भूपतेरत्र देशे
　सर्वे लोका ज्ञातकौशल्यविद्या।
अत्युत्साहाः कार्यमालम्ब्य दक्षा
　समोदन्ते लब्धलक्ष्मीकटाक्षाः॥　१०

निस्स्वेनात्र जनेन यत्करकलाकौशल्यमालम्ब्यते
दत्वा मूलधनं मितं तदुचितं साहाय्यमातन्यते।
तस्मादत्र हि तन्तुवायकृषिका अन्येपि चोत्साहतः
कृत्वान्योन्यसहायसङ्घनिचयानुद्योगमातन्वते॥　११

अथ गोविन्दसूरिः सखे अत्रापि भूयान् जनः निस्स्वतया भूयोभिः क्लेशैः परिपीड्यमान एव वर्तेतेति मन्ये इत्यगादीत्॥
श्रीनिवासकविरगदत्——सखे मैवं मंस्था यतः——

एवं नाना साधनानि प्रकल्प्य
　श्रीकृष्णेन्द्र प्रीतितः पात्यथापि।
अत्यालस्याः भाग्यहीनास्तु केचित्
　तूष्णींकाश्चेत् किं नु कुर्यात् स भूपः॥　१२

इदमास्ताम् अपरञ्च निवेदयाम्येतद्देशीयप्रजानां महाभाग्यशालित्वम्। यत्——

ख्यातेऽस्मिन् विभवास्पदे जनपदे भूयोभिवृद्धिं गता
साऽत्यन्तं जयति प्रजाप्रतिनिधिप्रद्योतमाना सभा।

राज्य बिभ्रति चामराजधरणीपालेन्द्रचूडामणौ
रङ्गचार्यसमाह्वयेन सचिवश्रेष्ठेन सम्स्थापिता ॥ १३

तदाकर्ण्य गोविन्दसूरौ सखे' इय किल प्रजाप्रातिनिधिसभा नाद्यतनी आ त्रिचत्वारिंशद्वत्सरेभ्यश्श्रूयते इत्यभिहितवति सोवदत्. अहो बाढम् अथापि तदार्नीन्तनस्य अद्यतनम्य च महदन्तरमस्ति। अद्य किल महाप्रभो प्रजापक्षपात अन्यादृश शृणु--

स्वातन्त्र्ये नितरा स्थितेऽपि तनितु स्वेष्टानुनाराद्विधीन्
धर्म केवलमत्र न॰ सुविहित मुख्य प्रजाना सुखम् ।
इत्यालोच्य निजप्रजासमितिनिर्वाह्य समम्त मुदा
तन्वानस्तदधीनमेव लभते तत्प्रीतिमिम्मत्प्रभु ॥ १४

ततो गोविन्दसूरि भो एतद्देशीयास्सकला प्रजा अस्मिन् सन्निवेशे अत्र मिलन्ति वा ? इति पप्रच्छ। श्रीनिवासकवि प्रत्यवादीत्। सखे न, तत्प्रतिनिधय केवलम्। अत एवहि प्रजाप्रातिनिधिसभेति व्यवहार । अवधेहि—

यावन्तोऽस्मिन् घनजनपदे सन्ति लोकास्समस्ता
तावन्तस्ते समुपमिळिता अत्र वाच्यं कथ वा ।
सभाषेरन्निति खलु समालोच्य सर्वत्र शक्ता
केचित्तत्प्रातिनिधितया कल्पिता अभ्युपेता ॥ १५

इयं च संवत्सरस्य द्विः समिळति नवरात्रमहोत्सवे महाराट्जन्मादिनमहोत्सवे च । अन्यच्च—

अस्मिन् सन्ति पृथग्विधा जनपदे सङ्घास्ततस्सङ्घत
कश्चित्कश्चिदपि प्रजाप्रतिनिधिः शक्तस्समाभाषितुम् ।

एना ख्यातियुता सभामुपगत राजाभ्यनुज्ञाबलात्
विज्ञाप्य सकल स्वसङ्घहितकृद्विज्ञापयेन्निर्भयम् ॥ १६

सभायामेतस्या प्रतिनिधिरनुज्ञामाधिगत
प्रजाभीष्ट यद्यत्समुचितमाभिख्याति कुतुकात् ।
विचार्याध्यक्षस्ततसकलमपि तत्रैव सहसा
स्वसिद्धान्त ब्रूते बहुजनमत नन्वनुसरन् ॥ १७

इदमभिनन्दनीयमेवाद्याम्याम्सभाया महत्त्वम् । ततो गोविन्दसूरौ किं नाम तन्महत्त्वमिति पृष्टवति स पुनरुवाच । सखे ! शृणु—

राष्ट्रेऽस्मिन् नवराजशासनविधिर्य कल्पनीयो भवेत्
प्रागेवाभ्युपगम्य एष समितावस्या समस्तैरिति ।
राज्यायव्ययनिर्णयोऽपि समितेरस्यां पुरस्तात्क्रमात्
आवेद्योऽधिकृतेति यद्धत ततोप्यस्या महत्त्व किमु ॥ १८

अहो न केवलमेतावता तृप्तिमाप्नुहि । राजकीयाखिलानुशासनविधान-विचक्षणा, मितसामाजिकजनालङ्कृता, न्यायविधायकसमेत्यन्या महा-समितिरप्यस्ति । अस्यां निर्णयाण्यखिलानि कल्याणपुर एव चर्च्यन्ते । प्रधानसाचिव एवात्राआसनमलङ्करोति । अत्रापि विधानान्याधिकृत्य प्रजा-श्चर्चितुं प्रगल्भन्ते । अवधीयताम्—

भूपालेन्द्रगृहोपभोग्यसकलद्रव्यव्ययायक्रम
राज्याङ्गीयचमूविचारमपि च त्यक्त्वाऽवशिष्टानिह ।
इष्टान् राज्यहितान् समस्तविषयानुद्दिश्य चर्चां मुहुः
कर्तुं न्यायविधायकाख्यसमितौ नश्शक्नुवन्ति प्रजाः ॥ १९

एतादृक्सभयोरिहैवमुभयोस्सत्यो प्रजासन्ततं
स्थैर्यं विन्दति राजकीयविषये स्वत्वाधिकारार्हता ।
एतस्मात्सुखसाधनैकनिलये पाश्चात्यराज्ये यथा
स्यादत्रापि तथा प्रजासमुदयस्वातन्त्र्यमन्यादृशम् ॥ २०

अत एव—

पुत्र मित्रवदाचरेदधिगते संवत्सरे षोडशे
धीमानित्युदितं नयार्थमवनीपालावतंसो विदन् ।
विद्याभ्यासयुता निजात्मसुतसमा स्वातन्त्र्ययोग्या प्रजा.
वात्सल्येन स एष पालयति तत्काङ्क्षानुसारेण हि ॥ २१

तथापि—

अत्रत्यास्सकला. प्रजास्सविनयास्मद्राजभक्त्याऽन्विता
संतुष्टा परिपालनेन लभता भूपालचूडामणे. ।
सत्पुत्रा पितरीव न प्रभुवरे प्रीतिं दधाना मुहुः
निर्बन्धेन मनोरथान् नवनवानभ्यर्थयन्ते ननु ॥ २२

किं बहुना—

एष खलु महिशूरदेश अभिवर्धितसपत्करकोलाहलपुरसन्निहित सुवर्णाकरकार्यपरिकर नवनवकल्पितानेकधान्यादि विविधवस्तुप्रेषणानयनजनयानायानानुकूलधूमशकटमार्ग श्रीमद्भारतसार्वभौमदयापुरस्सराज्ञाप्रतीक्षणायत्त चतुर्दशक्रोशपरिमितधूमशकटमार्गविरचनस्थापयिष्यमाण महासम्पदभ्युदयास्पदीभूत नौकावाणिज्यानुकूल पश्चिमसमुद्रतीरस्थितबट्कल्नौकास्थानः शैलमध्यप्रवहद्वेदवतीनदीसेतुबन्धन संस्थापित सागरायमाण वाणीविलाससागरपरिवर्धित विविधकुल्याविजृम्भितापरिमितशालिक्षेत्र धूमशकटाखिलयन्त्रनिर्वहणोचितशालाशोभित विनिर्मित-

सान्द्रतरसजात श्रीगन्धभूरुहजातसंभवतैलविक्रयविजृम्भमाणसंपदतिशय. उज्जृम्भमाणामितसंपदास्पदीभूत भद्रकरभद्रावतीलोहाकरकार्य धनधान्यबीजादिवितरणाद्यनेकसाहाय्यलाभसंतुष्ट कृषीवलाभिवर्धितकृषिवृत्ति क्वचित्क्वचिदुचितवापीकूपनिर्माणनिवारितक्षेत्राजीवजीवनाभावक्लेश अनिर्वाह्यनगराध्यक्षायत्तापराधिविचारण क्षेत्रारामादिभूसंबन्धविषयविचारणात्मकाभयाधिकार पृथक्करणसंजातजनमहानुकूल्य निर्दिष्टग्रामसामाजिकजनसमालोचनोद्धृतन्यायव्यवस्थानिवारितग्रामीणसामान्यविवाद. परिकल्पितपर्यायपरिवर्त्यमान गौरवव्यवस्थापकव्यवस्थाप्यसामान्यविवादापराधिविचारणन्यायस्थान. नवकल्पितचिरकालावशिष्टासङ्ख्य विवादविचारव्यवस्थानुकूलानेकन्यायस्थान परिकल्पितमहाराजसौधीयनिखिलकार्यनिर्वाहस्थान पौरकार्यनिर्वाहस्थानाद्यनेकमहानिवेश विसलत्तण्डुलवस्त्रकम्बलादिनिर्माणोचितानेकयन्त्रालय परिपुष्टशिशुनिवहासाधारणफलपुष्पनिचयापरिमित विचित्रवस्तुदेवतोत्सव संनिवेश समेळित गोवृन्दप्रदर्शनप्रवर्धमान जनमनस्समुत्साह. प्रधानमहासचिवसहायीभूतस्वायत्त तत्तद्राज्यविषयव्यवस्थाधिकारोपसचिवद्वय विशेषप्रोत्साहोल्लसदङ्गव्यायामाश्वव्यायाममल्लयुद्धनाटकाभिनयनादिचतुरजननिवह महाराजकरुणाकटाक्षसंमानितानेकसत्रशालाधिष्ठानशालावाचनशालाधर्मशालाविद्याशालावैद्यशालादिस्थापन तटाकारामादिनिर्माण विश्वविद्यानिलयसाहाय्यकरणादि धर्मकार्यप्रवृत्तधार्मिकजनसमन्वित समागतभारतसार्वभौमप्रतिनिधिप्रमुखमहाजनतोष्टूयमानमहावैभव अनवरतप्रवर्धमाननानाविधग्रामसंशोधनकार्यजाल. परिकल्पितविविधमहारोगनिवारणोपाय. समाकलितमहामूल्यमहागजयूथवशीकरणोचितसाधन आरचितानेकस्वजनगृहनिर्माणोचितधनसाहाय्यः सततान्वेषणसमुपलब्धशासनावळीपरिज्ञातपुरातनानेकचारित्रविषयः प्रजामण्डलोपलब्धपौरकार्यनिर्वाहकसंघमुख्याध्यक्ष-

निर्णयाधिकारः नवकल्पितादीयमानधनिकवणिगादिजनधनायोचितकरः भगवदनुग्रहसंपत्स्यमानमहाप्रभुसकल्पितासाधारणानेकनूतनाभ्युदयकार्य-जाल· विजयते तराम् ॥

भो· यद्यवकाशो दीयते अलोच्य अन्यानपि विषयान् सम्यक् आवेदयिष्यामीत्युक्त्वा विरराम ॥

गोविन्दसूरिस्तदखिलमाकर्ण्य सखे आदित एतावत्पर्यन्त भवदुक्तमखिलमप्याकर्ण्य अमन्दानन्दतुन्दिलोऽस्मि ॥

इतोपि किमावेदनयिम्? स्थालीपुलाकन्यायेन सर्वं विदित-मेवासीत् । एव महिशूरदेशाभ्युदय सादर समग्रमावेदितवतो भवतो विषयेऽहमतीव कृतज्ञोऽस्मीत्यवोचत् ॥

तत· कानिचिद्दिनानि तस्यैव सदने अवस्थाय तदनु समुपगते नवरात्रमहोत्सवे सभक्त्युन्मेषं सपरितोषं च विशेषतः परमेश्वरमाराध्य महामन्त्रपारायणादिना परिपावितान्तरङ्गः नवान्यहानि सानन्दमतीत्य विजयदशम्या सायं महाराजमङ्गलयात्रामहोत्सवमदृष्टपूर्वं दृष्ट्वा अननु-भूतपूर्वं हृदयोल्लासमनुभूय तदनन्तरे दिवसे साय महाराजसौध दिदृक्षु· सख्या श्रीनिवासकविना सह प्रस्थाय प्राकारान्तरमभ्येत्य, तत्र तं प्रति अये किमेतदाश्चर्यं स्थानम्? पूर्वमेवं नावर्ततेत्यवादीत् ॥

तद्वचन निशम्य श्रीनिवासकविरेवमूचे । अहो बाढम्

गृहास्संख्यातीताः अविरळतयाऽन्योन्यमिळिता
अभूवन् अत्यल्पा ननु तत इतः वीक्षय इह ।
पुराह्येतत्स्थान सकलमतिसंबाधमभवत्
कथं भातीदानं प्रिय मम सखे पश्यतु भवान् ॥ २३

अद्य किलामितधनव्ययेनातिविस्तारितमिद स्थानमतिरमणीयं परिशोभते । विलसितेन विन्यासेन द्रष्टृजननयनान्यानन्दयति नितराम् । इद पश्य महादर्पणम् समुपगतसकलपथिकजनवदनविलोकनोचितम् । अत्रत्यरामणीयकमाखिलमेतदेतद्दर्पणान्तरे कथमहह प्रतिफलित विलसति । विलोकयतु भवान् इति वदन् तेन सह महाराजसौधपूर्वभागमुपेत्यैवमुवाच।

अयमेव खलु महाराजसौध मभूतवैद्युतमहादीपविद्योतेन उत्तप्त-महाहेमरागिरिव विद्योतते पश्य ।

कल्याण विबुधाश्रय सुरुचिर राजावतसप्रिय
नव्य सौधमिम महीसूरपुरीराज्यश्रियो भूषणम् ।
राजद्वर्णतया शिलामयतया दीप्तया तथोत्तुङ्गता-
संपत्त्या च सुवर्णशैल इति को वक्तु जनो नेच्छति ॥ २४

एष खलु महाराजसौध सत्यलोक इव ब्रह्मालङ्कृत· वैकुण्ठ इव· लक्ष्मीविलासविलसितः कैलास इव सन्ततशिवोत्सव. महाकवि-वदनदेश इव वाणीविलासोपलक्षित· इन्द्र इवाकलितमहानन्दनः वसन्त इव सुमनोभिराम· तारापथ इव सूर्योदत सूर्य इव भास्वान् चन्द्र इव सद्वृत्तोपलसित· नक्षत्रवलय इव गुरुकविबुधाद्याश्रयः अल-काप्रदेश इव राजराजविराजित राजराज इव धनदः, निरन्तर-महाराजश्रेय.प्रार्थनपरायणभूसुरविसरसंततानुष्ठितानेकदेवताराधनमहामन्त्र-पारायणनवग्रहजपसूर्यनमस्कारादिमत्कर्मकलाप. नियमनिर्वर्तितनाना-विधानित्यदान समुचितमासाशनवितरणपरिपोषितभव्यभक्तिभासुरसेव-कजनसेवाविशेषपरितोषितमहाराजप्रदीयमानपरिपूर्णपूर्णपात्र ऋत्वि-क्पुरोहितमौहूर्तिकप्रमुखैरभिज्ञैर्वैदिकै पण्डितरत्न विद्याविशारद विद्या-निधि वेदान्तविशारदेत्यादिबिरुदाङ्कितै महाविद्वद्वरेण्यैः सनातनरा-

जकीयसम्प्रदायाभिज्ञैर्मान्यैः राजकार्यप्रसक्त राजतन्त्रप्रवीण राजक-विभूषणेत्यादिबिरुदोज्ज्वलैर्लौकिकैरधिकारिभिश्चालङ्कृतः वन्दारुवन्दिमा-गधवृन्दसमुद्घोषितजयजयशब्दपरिबृंहितमहास्तुतिकलकलः कर्णाटरा-ज्यालङ्कारभूतमहामहिमयुतात्यन्तरमणीयमहारत्नसिंहासनरञ्जितः मान्या-नेकराजन्यमण्डलोपाश्रय अम्बाविलास राजेन्द्रविलासाद्यनेकस्थानाविशे षविलसितः निरन्तरकल्याणपारंपरीविलसितकल्याणमण्डपमण्डित विवि-धसदुपचारोपकलितभक्तिलमितनित्याराधनसतुष्टया भव्यभावनाभरित-भक्तजनपरिपालनधुरंधरया भूपालकुलदेवतया भगवत्या श्रीचामुण्डा म्बया सतत परिपाल्यमानः अनितरसुलभानर्घनानाविधरमणीयमहा-भरणसशोभितान्तर्निकेतन , सनातनविविधसमुदाचारविधानविभासुरः देशान्तरागतप्रेक्षकजनमहासेचनकभूत. अकळङ्कातिदर्शनीयासाधारण-महादर्पणश्रेणीपरिरञ्जित श्राव्यतरनव्यविधभव्यवाद्यघोषः भजनजनप-रिकीर्त्यमानभगवत्कीर्तनगीतनिनाद संततपरिचरणव्यापृतबद्धकटिवेष्टन परिचारकजननिकरसत्वरयातायात अतिचतुरविख्यातचित्रलेखकविलि-खितविचित्रतरपुरातनपुण्यचरितमहापुरुषाकृतिविशेषविराजित' अगणि-तविचित्रवस्तुजालसमुल्लसित अतिमसृणविविधवर्णपरिरञ्जितहृद्यतरशि-लाकलितकुट्टिम अभूतपूर्ववैद्युतमहाप्रदीपप्रद्योतप्रकरविद्योतितो विज-यते तराम् ॥

याहि अन्त प्रविशाव इत्युक्त्वा तेन सह सौध प्रविश्य कल्याणमण्टपे स्थित्वा एवमभाषत सखे पश्य—

अत्रत्येषु शिलामयेष्वपि महास्तम्भादिपूच्चावच
वैचित्र्यं सुमनोहर विरचित दारुष्विवान्यादृशम् ॥
को वाऽश्मान इमे किलेति सहसा वक्तु नवश्शक्नुयात्
अन्यादृङ्नवपल्लवेष्विव यतो मासृण्यमुद्द्योतते ॥ २५

अत्र पश्य महाराज अखिलपरिजनपरिमण्डित भद्रासनमलकुर्वन् अत्यानन्दमाकलयति प्रेक्षकजनचक्षुषाम् ॥

गोविन्दसूरिः अहो ईदृशं विलासवैभवमनुभवतोऽस्य महाराजस्य दर्शनेनात्यन्त मुदितोस्मि । त्व खलु महाकविरसि । एनं कल्याणमण्टपं निर्वर्ण्य यथावस्थित झडिति स्फुरद्भि आर्याश्लोकैरेव वर्णय । आकर्ण्य कर्णानन्दमनुभवामीत्यकथयत् ।

स श्रीनिवासकवि सखे महानामोद , यथावस्थितमेव किंचित् वर्णयामि । आकर्ण्यताम् , इत्युक्त्वा सपदि काश्चन श्लोकान् सलीलमेवमफाणीत्—

दाता कविमणि विद्यानिधि पण्डितरत्न मुख्यविरुदानाम् ।
कल्याणमण्डपोऽय कलयतु कल्याणमस्माकम् ॥ २६

नवरात्रोत्सवसमितो नरपतिवर्षाभिवृद्धिदिवसे च ।
कृतनवनवपरितोष. विलसति कल्याणमण्टपो ह्येषः ॥ २७

सौम्यगुरुकविबुधाद्यैरुत्सवादिवसेषु सकलिता ।
सुरपतिसभेव राजत्येषा कल्याणमण्टपिका ॥ २८

यो बहुदिगन्तरागतविरुदाङ्कितगायकेन्द्रसंगीतैः ।
कर्णानन्द कलयति सोऽयं कल्याणमण्टपो जयति ॥ २९

यत्र कविकल्पभूज. जितभोज कृष्णराण्महाराजः ।
भद्रासनमाकलयति धन्योऽय भद्रमण्टपो जयति ॥ ३०

भद्रासनाधिरूढ यस्मिन् कर्णाटराज्यलक्ष्मीशम् ।
जन उपहारैः प्रणमति स एष कल्याणमण्टपो लसति ॥ ३१

नवनवचित्रविशेष प्राप्तविचित्रप्रकाशपरिवेष ।
कलितोत्सवपरितोषः जीयात् कल्याणमण्टपस्त्वेषः ॥ ३२

उत्सवदर्शनकुतुकादुपरिनिगूढा अमर्य एवेति ।
पश्यन्त्योऽन्त पुरिका भाव्यन्ते भद्रमण्टपे ह्यत्र ॥ ३३

धृतभद्रमण्टपाकृतिरवनी मुदिता विचित्ररत्नयुता ।
श्रीकृष्णावनिपाल ससेवितुमागतेव भातीह ॥ ३४

कल्याणमण्टपीया रचिता नवरत्नमालिका ललिता ।
श्रीकृष्णराजकरुणाकटाक्षलसिता विशेषतो जीयात् ॥ ३५

गोविन्दसूरिस्तन्नवरत्नमालिकामाकर्ण्य पुलकितगात्रस्त प्रति सखे! हृद्यतमेय सुललितपदनिबद्धा नवरत्नमालिका परमानन्दमालिकामाकलयति मामके मानसे । यद्येष कविकल्पतरुर्महाराजस्समाकर्णयेदेनां विशेषतो भवन्त समानयेत् । अह पुनस्ते किं करवाणि. प्रत्यालिङ्गनं करोमीति त दृढमालिलिङ्ग ॥

स श्रीनिवासकविः --सखे प्रियसखस्य अङ्गपरिष्वङ्गादपि किमन्यदस्ति महत। तुष्टोऽस्मि केवलगुणग्रहणपरस्य सहृदयस्य सुहृदस्ते सूक्तिमुक्ताफलेनेत्युक्तवान् ॥

ततस्तु तावुभावपि तत्रसभायां आ महोत्सवनिर्वर्तनं कुत्रचिदधिष्ठाय सबहुमान समर्पितेन ताम्बूलेन पुष्पमालिकया च समानितौ तत्रः प्रस्थाय निजसदनमुपजग्मतु ॥

अथान्येद्युः गोविन्दसूरि दैवन्यस्तभर भगवन्तमुमाकान्तं स्वान्ते परिचिन्तयन् शुभे मुहूर्ते गृहान्निर्गत्य दयालुं विद्वत्प्रियं कचन अधिकारिवर्यमुपसृत्य तत्साहाय्येन लब्धावकाशः महाप्रभोस्सन्निधिमेत्य

आशिषो वाचयित्वा फलं समर्प्य तदाज्ञया सविनयमुपविष्ट आ बहुकालं निखिलशास्त्रार्थसारसमुपबृंहितसरसतरस्वीयवचोवृष्टिधाराविसरैः तं परितोष्य ततः परितुष्टेन विद्वज्जनसमुल्लासनैकलालेन तेन भूपालेन बहुभिः धनकनकदुकूलाभरणैः समानितः तत्प्रसादेन समुपलब्धमहावेतनश्च तस्यानुज्ञां प्राप्य अमन्दानन्दतुन्दिलान्तरङ्गः ततः प्रस्थाय सुहृदस्सदनमेत्य तस्मिन् सकलमपि सादरं व्यजिज्ञपत् । स च तं बहुधाऽभिनन्द्य सादरमुपचचार ॥

अथागते भार्गववासरे महाबलगिरिमारुह्य भगवतीं देवीं भक्तितस्सिषेवे ॥

ततश्च मित्रवर्यस्य श्रीनिवासकवेरनुज्ञामधिगम्य प्रस्थाय श्री गरलपुरक्षेत्रमधिगत्य भगवन्तं श्रीकण्ठेश्वरं भक्तितस्सेवित्वा ततः प्रयाय तत्रतत्र महिशूरदेशान्तर्वर्तिषु नगरेषु ग्रामेषु चावतीर्य तत्रत्यमखिलमभ्युदयं च दृष्ट्वा एकैकं दिनमुषित्वा तत्रत्यैरास्तिकैस्सम्पन्नैर्महाशयैर्बहुशस्संमानितः ततः निवृत्य निजपत्नीपुत्रदर्शनोत्सुकः कतिपयदिवसान्तर एव स्वं ग्राममुपेत्य सत्वरं निजसदनं गत्वा दृष्ट्वा पत्नीं पुत्रांश्च तुष्ट्वा तत्कुशलतः सान्त्वयित्वा स्वविरहचिन्ताकुलान् तान् स्वकुशलनिवेदनेन प्रदर्श्य लब्धमसाधारणं महाराजसन्मानं आवेद्य च महिशूरदेशाभ्युदयविलासविशेषानशेषान् तान् परितोषयामास ॥

ततश्च—

नित्यं श्रीकृष्णराजेन्द्रश्रेयःप्रार्थनतत्परः ।
आराधयन् महेशानं निश्चिन्तस्सुखमन्वभूत् ॥ ३६

अस्तु स्वस्ति प्रजाभ्यस्सततमिह नृणां धर्ममार्गेऽस्तु बुद्धिः
भद्रं गोब्राह्मणेभ्यो भवतु सुखयुतास्सन्तु लोकास्समस्ताः

काले वर्षन्तु मेघा विलसतु वसुधा सस्यशालिन्यजस्रं
लोकेशस्य प्रसादात् जगति विजयतां सत्कवीनां वचश्रीः ॥

जयतु जयतु धन्यः कृष्णराजक्षितीशः
जयतु जयतु मान्यश्श्रीमहीशूरदेशः ।
जयतु जयतु नित्यं यादवीसन्ततिश्रीः
जयतु जयतु नुत्यं रत्नसिंहासनं च ॥ ३८

इति महीशूरपुरी सीतारामकविकृतौ श्रीमहिशूर-
देशाभ्युदये चम्पूप्रबन्धे
उत्तरोल्लासः

मैसूरु सीतारामशास्त्री-

॥ श्री ॥

## पाठशालावृत्तान्त

श्रीमन्महाराजसंस्कृतमहापाठशालाया' पञ्चाशद्वर्षमहोत्सवे पाठशालासमितिसदस्यानां सस्कृतविद्याभिवृद्धिमधिकृत्य विज्ञापनायां समर्पिताया श्रीमत जि सि एस् ऐ., जि वि यि. इत्यादिबिरुदपरिभूषितस्य श्रीकृष्णराजमहाराजस्य प्रत्युत्तरम्—

## पाठशाला

आर्यमिश्राः.

अथेदानीं तावत् महापाठशालाया' पञ्चाशद्वर्षमहोत्सवे सम्मिलितानां भवता समागमोऽस्माकममन्दमानन्द जनयति। अस्मत्तातचरणा इव वयमप्यस्या पाठशालाया योगक्षेमसम्पादने सतत बद्धादरा तस्या कार्यसम्पत्तिमानन्देनाभिमानेन च प्रतिपालयामः। अस्मत्पितामहचरणानामाकाक्षामनुरुध्य क्रिस्ताब्दानां षट्पञ्चाशदधिकाष्टशतोत्तरैकसहस्रतमे वत्सरे स्थापितेय पाठशाला नानाविधविप्लवपरीताऽपि दिष्ट्या कथमप्येधमाना राष्ट्रमेतदलङ्कुर्वता विद्यास्थानाना मध्येऽनन्यसदृशीं कामपि पदवीमधिरूढा चकास्ति ॥

अधुनाननेप्सितसाधनै अन्यैर्विद्यास्थानैरिय यद्यप्युत्तरोत्तर निराहितमहिमातिशयाऽभवदित्यत्र न कोऽपि सशय । तथाऽपि यत्प्रेप्सितमनया पाठशालया सिषाधयिष्यते तदनर्घमनवद्य च वर्तते । नैव च तस्या अनर्घता इयतीति गणयितु शक्यते, यतोऽस्माकमार्षदर्शने यद्यत् श्रेष्ठं गरिष्ठ शाश्वतिक च दरीदृश्यते

तत्साधनायैवेय पाठशाला वरीवर्ति । सम्स्कृतविद्याया· केन्द्रस्थानमिय हि पाठशाला । केन्द्रादस्मादस्माकमार्षविद्यातेजोराशिरश्मय न केवलमस्मिन् राष्ट्रे सर्वत. अपि तु राष्ट्राद्बहिरपि प्रसरान्ति । किं बहुना —यद्भरतखण्डस्य नागरकताया मूलस्तम्भायित समयाचारसम्प्रदायदन्तुरमार्षविज्ञान तद्भाविजनोपयोगायानया विद्याशालया परिपाल्यमान वर्तते । तदित्थ रक्षितव्यरक्षणेनेय पाठशाला कस्मैचन अनर्घाय भरतखण्डश्रेयसे प्रभवति नेयमतिशयोक्तिः, यतोऽस्माक समयाचाराणा राजनीतिप्रचाराणा आत्मविद्याविषयाणा वा साधुतासाधुतापरीक्षापूर्वक परिवर्तनरचनाया यद्यत्पुरा साध्वभवत् न तदस्माभिस्त्यक्तु शक्यते, नापि तद्विच्छेत्तुमर्हति । भवितव्यता हि अगाध भूतमूलमधितिष्ठति ॥

## संस्कृतविद्या

अपि च या विनयवत्ता भूतहितैषिता च नान्या पुरातनी वा आधुनातनी वा उत्सन्ना वा सजीवा वा विद्या साधु शिक्षयितुं शक्नोति, तां हि संस्कृतविद्या सम्पादयितु बाढं प्रभवति । न हि संस्कृतविद्याप्राशस्त्य तत्साध्यबाह्यवस्तुज्ञानेन वा वस्तूना परस्परं विलसता कार्यकारणभावादिज्ञानेन वा निर्धार्यते. यतो वस्तुज्ञानानामाश्रयो ज्ञाता आत्मैव प्रथमं ज्ञेयो वर्तते । आत्मज्ञानस्य द्वारं हि संस्कृतविद्या । तद्द्वारमनन्यशक्य संस्कृतविद्ययाऽपाव्रियते । नैवात्मविद्या निष्फला, सा हि विद्यानामुत्तमा विद्या, शास्त्राणा च उत्तमं शास्त्रम्, तस्यास्सोऽयमुत्कर्षः फलेनैव विशदीक्रियते । यतस्तया हि भरतखण्डे सर्वाश्च कलास्सम्पादितस्वसत्ताका· प्रकाश्यन्ते, तयैव हि भरतखण्डनागरकताऽनन्यादृशी कृता ॥

भरतखण्डस्था चित्ररचना हि अन्यो विस्तृतो विद्याप्रपञ्च इत्य-

धुनातना विद्वांसो मन्यन्ते । यथा पुरा ग्रीकूजनाना विद्याधीतिः क्रिस्ताब्दाना षोडशे शतके प्रतिभाप्रकर्षाधायिनी नवीना विद्या प्राजनयत्तथैवेय चित्रलेखनाविद्या नवा कामपि विद्यां जगति जनयिष्यतीव भाति । भरतखण्डस्य परितो हि देशेषु याऽनन्यादृशी चित्ररचना दृश्यते. तस्या. भरतखण्ड एव मातृभवनम् । यश्चास्या चित्ररचनाया देवालयाचित्रेषु गोपुरेषु नटराजताण्डवाकृतिरचनासु बुद्धप्रतिकृतौ अजन्तगुहासु रेखावक्ररेखादिनिर्मितिषु रागरागिणीनामालापेषु वा गूढोऽर्थस्समास्ति, तमर्थं संस्कृतविद्या विना नान्या विद्या व्यख्यातु शक्नोति । किं बहुना—एषियाखण्डस्य स्टेपस्नामकमध्यप्रान्तादारभ्य प्राच्यतमप्रवाळद्वीप (Caral Strands and reefs) यावत् चित्ररचनास्समुल्लसन्ति । तास्सर्वा अपि संस्कृतविद्ययैव भास्यमाना व्यावर्णनीया विवेचनीयाश्च विद्यन्ते ॥

परमं प्रयोजनम्

यदितोऽप्यत्यधिकं निखिलेन जगता प्रेप्स्यते तद्धि शाश्वतिक सत्यम् । एतच्च नित्य ब्रह्मात्मक शान्तमनन्यविद्यासाधारण संस्कृतविद्यायामेवोद्बुध्यते । तद्धि पुरुषैक्यान्नान्यत् । प्रपञ्चे या विविधा रचना दृश्यते तासु तदेकमेव शाश्वतम् । तदवाप्तिर्हि जगद्व्याधेरेकं प्रधानमौषधम् । स व्याधिर्हि विवेकशून्येन भौतिकशास्त्राभ्यासेन भौतिकशक्तिसमार्जनेन च द्विगुणितः त्रिगुणितश्च इदानीं जगतोऽरुन्तुदः विद्यते । दुःखादस्माज्जगतो मनुष्यस्य च कथ वा मोचनं स्यादित्यद्धि अधुनातनानां मुख्यो जिज्ञासाविषयः । सेय मुक्तिः सम्पादिता चेच्चिरात्सिषाधयिषित मानवजन्मफल प्राप्त स्यात् । आर्जितस्य ज्ञानस्य भौतिकादिशक्त्युपायस्य च सम्यग्विनियोगाय ये विवेकस्समपेक्षित. स विवेकोऽनया प्रादुष्ष्यात् । संस्कृतविद्याधिगमस्तत्त्वावबोधश्च जगतो दुःखमोचनाय विवेकोत्पादनाय च बाढ प्रभवतः ॥

पर तु या बाह्या विधानक्रियास्सर्वासा पुरातनविद्याना गूढं तत्त्वार्थ तिरोदधते ताभ्योऽपि प्रशम्यतरा विनयसम्पद तत्त्वार्थावगति च सर्वेऽपि सम्कृतविद्यार्थिन पाठशालाया अम्यां विद्वासश्च बाढमार्जयेयुरित्येतद्धि अधूना सर्वातिशायि प्रारिप्सित कर्तव्य सर्वेषाम् ।

पण्डिता

यच्च भरतखण्डविदुषा प्रतिभाचातुर्य यश्च सम्कृतविद्यायाः सारतमोऽर्थ· तम्मिन्नेकाग्रमनम्कता विना न कोऽप्यम्यां पाठशालायामधीतविद्य पण्डितशब्दमर्हति। यस्तु पण्डित स एवहि जगतो विद्यादीपिकाधृत्. जगतो विवेकसन्देशहर . स एव सद्विद्या मूर्तिमती, मूर्तस्सत्यधर्म . स एव आत्मना कृतम्यानात्मविजयम्य वार्ता हराति। स एव सौशील्यसुज्ञानयोस्स्वातन्त्र्य विवृणोति, 'स एव ब्राह्मण्यसारभूतामात्मज्ञानिनो निर्भयता व्यनक्ति। तेनेद अवधार्य—यत्कश्चन विज्ञानरक्षाभरस्स्वमूर्ध्नि न्यस्त इति। यतस्तेनैव तस्मिन्नेव आर्षविज्ञानवैभव परीक्ष्यते, तस्यानर्घता च निर्धार्यते ॥

तदित्थं पण्डितो यदि जगति जीवतां सतीर्थ्यानामन्येषां· च जनाना प्रेप्सितमात्मज्ञानं वितरन् स्वजन्म सफलतां नयेत्, तदा परित्राणाय साधूना बद्धपरिकरो भगवान् न तं कदापि त्यजेत्। यत उक्तं हि भगवतैव 'योगक्षेम वहाम्यहम्' इति ॥

किंच पाण्डितस्य जीवितसर्वस्वभूतो निधिस्सा सस्कृतविद्या, यस्यास्स एव रक्षिता, या च स्वस्य पूर्वार्जितपुण्यफलमिव अन्यानपहार्यो निधिरिव च तस्य वशे वर्तते। तदित्थ चिन्तयन् सुखेन पण्डितो विजयताम् ॥

## प्रार्थनाप्रत्युत्तरम्

सङ्क्षिप्तायामपि पुष्कलार्थाया पाठशालासमितिसदस्यानां विज्ञापनाया द्वौ मुख्यौ विषयौ परामर्शनीयौ दृश्यते । भावी पाठक्रमपरिष्कार एक . कृतविद्यानां जीविका चान्या । पाठक्रममधिकृत्येद तावदवधार्य— यत्पाश्चात्य विद्यावृत्तिसमयाचाराणा सम्पर्कवशात् ये ये मतिभेदास्ताव दिदानीं भरतखण्डे दृश्यन्ते न तैस्मस्कृकपाठशालास्थितिरेकैव विकृतिमापद्यत इति । पाठशालाया भावी पाठक्रम कथ वा परिष्कार्य इति न वयमिदानीं दिक्प्रदर्शन कुर्महे । न इमे विषया यद्यपि विद्वत्परिबृंढै मीमासयितव्या । तथापीद तावत्सुवच. यद्देशकालसमयाचारभेदानुरोधेन पाठक्रम परिष्कारेऽवश्य क्रियमाणेऽपि .आर्षविद्याधिगमायापरिहार्या वैनयिक्यो वृत्तयस्सर्वथा सर्वैरपि सरक्षणीया इति । तासु गुरुशिष्ययो परस्पर पितापुत्रभाव., अधीतानां विषयाणा कण्ठस्थता. ज्ञानायैव केवल विद्याधिगम . वेतनादिफलाभिसन्धि विना शिष्येषु विद्यावितरण, सौशील्यसद्वृत्तसदाचारसद्गुणाधायिन्या गुरुदेवताभक्त्यास्तिक्यबुद्धिस्थैर्यसपादयित्र्यां विद्यायामभिरुचिश्चेत्येता वृत्तयस्सदा सरक्षणीया' ॥

द्वितीयविषयमधिकृत्येद तावत्सविस्तमवधार्य भवद्भिः, येये समुपाया. पाठशालाया कृतविद्याना जीविकाहेतो' पाठशालासमुदयहेतोर्वा समितिसदस्यैस्सूच्यन्ते ते सर्वेऽप्युपाया मदीयराज्याधिकारिभिस्सादरमाद्रियन्त इति ॥

## उत्सवोपसंहार

आर्यमिश्राः यस्य कृते वयमिदानीमिह संमिलिताः स महोत्सव' चरित्रानुवृत्तश्चिरात्स्मरणीयो वर्तते । यस्य कस्यापि संस्थानस्य पञ्चाशद्वर्षस्थानीया स्थितिरभवदित्येतदेकमेव सर्वेषामभिनन्दनीयम् । तत्राप्येषा पाठशाला इदानीमनादृतप्रायाय संस्कृताध्ययनाय स्थापि-

ताऽपि सत्स्वप्यपरिमितेष्वन्तरायेषु पञ्चाबद्वर्षाणि कृतप्रचारा समभवदित्ये द्भूयोभूयोऽप्यभिनन्दनीयमेव ॥

अनश्च ये ये महान्तनम्तम्या प्रकर्षाय बद्धदीक्षा ममभवन्स्ते सर्वेऽप्यभिनन्दनीया । किंच अत्र वर्तमानाश्चोपाध्याया विशिष्याभिनन्दन मर्हान्ति । ते हि निर्व्याजेन प्रेम्णा म्वकार्यमकुर्वन् । तदम्ये मस्कृतपाठ शालायै वयमितोऽप्यधिक जय जननोपयागाय चिरादवाम्थितिं चाशास्महे ॥

येच पाठशालाया उपाध्याया विद्यार्थिनश्चाम्माक अस्मिन्महोत्सवे स्वागतमकथयन् तेषा धन्यवाद सूचयाम ॥



॥ श्री ॥

## ज्योतिश्शास्त्रावतरणम् .

यश्श्रीवल्लभधाम यस्य भुवन मुप्त प्रबुद्ध क्रमात्
अन्तर्धावुदये भवेद्भुवि यतो वृष्टि. प्रजाऽन्नप्रदा ।
यश्शीतांशुमरीचिदो दिविषदां सौहित्यदो योऽध्वरे
यस्साक्षी जगता च स प्रतिकलं दत्तां दृढ वश्शिवम् ॥

अयि— सहृदयधौरेया विद्वद्वरा:, साम्प्रतमत्रभवतां भवता निगमागमपुराणेतिहासदृढतमविश्वासतन्तुस्यूतान्त करणानां निश्श्रेयससाधन पटिष्ठतदुदिनकर्मविधानजविवेकहुतवहपरिप्लुष्टबहुविधजनिमूलकर्मगुल्माना हैतुकमर्लीममौक्तिवैदेशिकविमलनिशिताधिक्षणानां सविधे मितधियामचरमोऽहं चापलेन किमपि विज्ञापयितुमिच्छामि ॥

मामिकामिमां विज्ञापना स्तनन्धयगिरामिवाकृत्रिमप्रणयभरादाद्रियध्वामिति प्रथममेव प्राञ्जलिस्सविनयमभ्यर्थये ।

नेद तिरोहित भवता यदविद्यामये भुवनेऽत्रानादिकालप्रवृत्तामतिहतदुष्कर्मजालसमासादितजन्मजरानिधनादिचक्रबम्भ्रम्यमाणाना प्रतिक्षणजरीजृम्भद्गाढाविवेकदूरीकृतभगवद्गुणाम्बुधिकणस्मरणाना मितायुषा बहुकालसाध्यचित्तैकाग्र्यसम्पाद्यभक्तियोगदविष्ठाना निरयाब्धिनिमग्नाना कस्मिंश्चिदपि जन्मनि साधीयसी गतिमलभमानाना चेतनानामुद्दिधीर्षया स्वर्गापवर्गादिप्रदानि मितायुस्सुसाधानि अचिरा देव कामदुघानि. तत्तद्वर्णाश्रमौपयिकानि, याग, जप, होमादीनि,

सत्कर्माणि मातृसहस्रादप्यतिवत्सला स्वतनूजाभिः स्मृतिभिस्सार्धं, बोधयति तत्रभवती श्रुतिरिति ॥

तानि च कर्माणि साधिष्ठ एव समये द्विजातिना यथाविधि सश्रद्धमनुष्ठीयमानान्यविकलमेव फल प्रसुवते लोके सुसमये सुक्षेत्रे च प्रयुक्ता साध्वी कृषिर्हि फलेग्रहि ॥

स तु कालस्सूर्यादीनां ज्योतिषा यथार्हमुदयास्तमयसमागम-युद्धदक्षिणोत्तरदिशापरिभ्रमणवक्रगमनादिभि गतिविशेषैरवगन्तु शक्यते ते तु ज्यौतिष शास्त्रमन्तरा बोद्धुमशक्या ॥

यतो ज्योतींषि ग्रहनक्षत्राणि तान्याधिकृत्य कृतो ग्रन्थो ज्यौतिषमिति हि तस्य निर्वचनम् । तस्मादाम्नायाङ्गभूतस्य तस्य वेदच-क्षुष्ट्वेन षडङ्गेषु निकाममभ्यर्हितता। न हि भुवि कर्णनासादिभिरन्वितोऽपि नयनविहीन किमपि विधातुमीष्टे । तथैवोक्त सिद्धान्तराजे—

वेदा यज्ञप्रवृत्ता यजनमथककुप्कालयोर्निश्चयेन
दिक्कालौ भग्रहेभ्योऽनुमितपरिमिती ते पुनर्गोलसंस्था· ।
गोले निम्नोन्नतत्वं तदपमपलतस्ते तु सिद्धान्तगम्ये
तस्माद्वेदाङ्गमग्र्य नयनमभिहित ज्योतिष शास्त्रमेतत् ॥

इति । शास्त्रमिदमाचतुरानन वसिष्ठादिमुनिपरम्परया धरणिमवतीर्णम् । तदुक्त शिरोमणौ—

दिव्य ज्ञानमतीन्द्रिय तदृषिभि ब्राह्म वसिष्ठादिभि·
पारम्पर्यवशाद्रहस्यमवनी नीतम् ॥ इति ॥

अस्य च अष्टादश प्रधानतमा प्रवर्तका , तेषा नामानि कश्यपसंहिता-यामभिहितानि—

सूर्य पितामहो व्यासो वसिष्ठोऽत्रि· पराशर ।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिरा ॥

लोमश· पौलिशश्चैव च्यवनो यवनो भृगु ।
शौनकोऽष्टादशश्चैते ज्योतिश्शास्त्रप्रवर्तका ॥

इति। एवमस्य तन्त्रस्य त्रिस्कधात्मकतया गणित संहिता हारासु प्रत्येकमष्टादश प्रबन्धास्समजायन्त। ते तु कालदौर्लल्ल्येन यत्र कुत्र वा निलिल्यिरे ॥

सम्प्रदायोऽय प्राचा ज्योतिर्विदां यत्रिषु स्कन्धेषु सरससरसाना भावगभीराणां प्रबन्धाना प्रणयन नामेति ॥

यथा कमलभुवा स्वसुताय नारदाय वासिष्ठायचोपदिष्टो ग्रन्थो ब्रह्मसिद्धान्त । रविणा स्वभक्ताय मयायोक्तस्सूर्यसिद्धान्त ब्रह्मशापाद्यवनजातावुत्पन्नेन रोमकनगरमधितस्थुषा मरीचिमालिना रोमकाय यवनाय समुपदिष्टो रोमकसिद्धान्त ॥ पराशरेण मैत्रेयाय कथितः पराशरसिद्धान्त । इत्येवमन्येऽप्यूह्या. ॥

इत्थमन्यैश्च शाकल्यसोमदेवलासिताद्यैर्महर्षिभिः स्वस्वान्ते वासिभ्य. स्वस्वनामाङ्कितास्सिद्धान्तास्समभाणिषत। परमेतेषु ब्रह्म रवि वसिष्ठ रोमक सोम व्यासादीनां कतिपय एव सिद्धान्तास्समुपलभ्यन्ते ॥

अन्ये च तत्र तत्र विरला आसन्। नकेवलमिदं शास्त्र दिव्यदृग्भिर्मुनिप्रकाण्डैर्बहुधा प्रख्यापितम्। किं तु विजातीयैर्यवनैरपि विशदीकृतम्। तेषु परां प्रौढिमधिगतम् ॥

तेषामुक्तिरपि विषयभूम्ना सभाजनीयेत्यमुमर्थं संहितायां व्याचख्यौ श्रीमान् वराहमिहिरः—

म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिद स्थितम ।
ऋषिवत्तेपि पूज्यन्ते किंपुनर्दैवविद्द्विजः ॥ इति ॥

इदमत्रावधेयम्—रविमुखादलम्भि तन्त्रमिदं रोमकयवनेन। स स्वशिष्येभ्यस्समुपदिश्य प्राचीकशत्। इत्थं पारम्पर्यात्परां काष्ठामधिरूढं तेष्विदमिति। अयमर्थः—

रोमकं रोमकायोक्तं मया यवनजातिषु॥
जातेन ब्रह्मणश्शापात् तथादुर्यवनस्य च।
रोमके नगरे तच्च रोमकेण च विस्तृतम्॥

इति मिहिरारुणसंवादेन स्पष्टतरमवगम्यते॥

साम्प्रतमपि पञ्जाबप्रभृति जनपदेषु ज्योतिश्शास्त्रे गरीयसीं ख्यातिमधिरूढा बहवो यवनज्योतिर्विदस्सन्तीत्यत्रबुध्यते॥

किञ्च, रोमकयवनस्य, यवनाचार्येण पारसीकभाषया प्रणीतं ज्योतिश्शास्त्रैकदेशरूपं वार्षिकादि, नानाविधं फलादेशफलकं शास्त्रं ताजिकशब्दवाच्यम्॥

खत्तखुत्तो रोमकश्च हिल्लाजो धिषणाह्वयः।
दुर्मुखाचार्य इत्येते ताजिकस्य प्रवर्तकाः॥

इति च हायनरत्नोक्तरीत्या ताजिकशास्त्रप्रवर्तकत्वमप्यभ्यधायि। किञ्चास्य बृहज्जातकव्याख्यायां भट्टोत्पलेन तत्र तत्र तथा च यवनेश्वर इत्युपक्रम्य तदुक्तपद्यानामुदाहृतत्वात् यवनजातकग्रन्थोपलब्ध्या च संस्कृतभाषायामपि ग्रन्थप्रणेतृत्वमवगम्यते॥

ताजिकशास्त्रस्य होरातन्त्रोक्त—ग्रहषड्बलेष्टकष्टफलाश्रय—गुणकादिविवेकसहकृतशुभाशुभ फलकथनादप्यल्पतरश्रमसाध्याव्यभिचरित सूक्ष्मसदसत्फलबोधनपटीयस्तामभिवीक्ष्य तदधीयानैः गुणैकलुब्धैः समरसिंहादिभिर्विप्रैर्विबुधैरमरभाषया बहवो ग्रन्था निबद्धाः॥

अत इदमवधेयम्---सवितृप्रसादलब्ध-त्रिस्कन्धज्योतिष-वैदुष्यस्य, यवनाचार्यस्याष्टादश--ज्योतिश्शास्त्रप्रवर्तकेषु परिगणितत्वेन तदुक्तेः परमप्रामाणिकतया तदुक्तस्य ताजिकस्य सुखेन शुभाशुभफलाभिधायित्वात् रव्युपदिष्टार्थगर्भितत्वाच्च सहृदयैस्समरसिंहादिभि संस्कृतेन तन्निबद्धमित्यस्मत्पूर्वजै ब्रह्मवसिष्ठपराशरादिमुनिभि प्रणीतानां ग्रन्थानामध्ययनबलादेवाधिगत ज्योतिश्शास्त्रपाण्डित्यमित्येतन्निर्विवादमिति ॥

शास्त्रमाद्य तदेवेद यत्पूर्व प्राह भास्कर ।
युगाना परिवर्तेन कालभेदोत्र केवलम् ॥
इत्थ माण्डव्यसक्षेपादुक्त शास्त्र मयोदितम् ।
विस्तरस्तीरविचन्द्राद्यैर्भविष्यति युगेयुगे ॥
संसाध्य स्पष्टतर बीज नळकादियन्त्रेभ्य. ।
तत्संस्कृतग्रहेभ्य कर्तव्यौ निर्णयादेशौ ।
यदा पुनर्महता कालेन महदन्तरं भविष्यति ॥

इति च सौरवासिष्ठसिद्धान्तब्राह्मस्फुटसिद्धान्तासिद्धान्तशिरोमण्याद्युक्तप्रक्रियया कालभेदेन ग्रहगतौ वैलक्षण्यसम्भवादार्षसिद्धान्ताना स्वस्वकालोपयोगितया मुनिभ्योऽर्वाचीनैरार्यभट लल्ल वराहमिहिर ब्रह्मगुप्त भास्करादिभिर्गणकसार्वभौमैस्स्वस्वाभिमतसिद्धान्ता नळकादियन्त्रबलाद्बीजपदवाच्यं गतिविवरमवबुद्ध्य तत्संस्कृतग्रहगतिबोधकैः प्रबन्धैस्समुद्धृता. । यथा—

कलिसंज्ञे युगपादे पाराशर्यं मतं प्रशस्तमतः ।
वक्ष्ये तदहं तन्मम मततुल्यं मध्यमान्यत्र ॥

इति वदताऽऽर्यभटेन पराशरसिद्धान्त',

"आर्यमटाभिधानसिद्धान्ततुल्यफलमेतदकारितन्त्रम्"

इति कथयता लल्लेन आर्यभटतन्त्रम्, "पौलिशरोमकवासिष्ठसौरपैतामहास्तु सिद्धान्ता" इति भणता वराहमिहिरेण पौलिशादयः पञ्च सिद्धान्ताः.

"ब्रह्मोक्त ग्रहगणित महता कालेन यत्खिलीभूतम् ।
अभिधीयतेस्फुट तज्जिष्णुसुतब्रह्मगुप्तेन" ॥

"यतोऽत्र ग्रन्थे ब्रह्मगुप्तस्वीकृतागमोऽङ्गीकृत." इति च ब्रुवद्भ्या ब्रह्मगुप्तभास्कराभ्या ब्रह्मसिद्धान्तश्च, क्रमशो दृग्गणितैक्यसम्पादनाय मूलतया समादृताः । अनुरुद्धेय सरणिरन्यैर्नव्यैरपि ब्रह्मदेवगणेशादिभि. प्रगल्भगणकै ॥

इत्थ प्रत्ना नूत्नाश्च विदग्धगणका राजसाह्याधिगतबहुसूक्ष्मयन्त्रवेधोपलब्धबीजसंस्कृतान् पञ्चाङ्गसाधनोपयुक्तान् दृक्तुल्यान् करणग्रन्थान् कुर्वाणास्समासत ॥

तत्तद्गतिवशान्नित्य यथा दृक्तुल्यता ग्रहाः ।
प्रयान्ति तत्प्रवक्ष्यामि स्फुटीकरणमादरात् ॥

यात्राविवाहोत्सवजातकादौ खेटैस्स्फुटैरेव फलस्फुटत्वम् ।
स्यात्प्रोच्यते तेन नभश्चराणां स्फुटक्रिया दृग्गणितैक्यकृद्या ॥

श्रीकेशव स्फुटतर कृतबान् हि सौरा
  र्योसन्नमेतदपि षाष्टिमिते गतेब्दे ।
दृष्ट्वा श्लथ किमपि तत्तनयो गणेश.
  स्पष्टं यदा ह्यकृत दृग्गणितैक्यमत्र ॥

इति परस्सहस्रैर्वचनै दृक्समगणितासिद्धपञ्चाङ्गमेव सर्वकर्मोपयोगीति ज्योतिर्विदां सिद्धान्तः । इदानीन्तनास्सप्तपूरुषादिसमासादितै. परमस्थूलै. स्त्रीमुखकर्शितैः पदकैः पञ्चाङ्गकरणेनैव धन्यंमन्याः केचि-

द्रूणका इव दुराग्रहदुरभिनिवेशपिशाचिकाग्रस्ता नावर्तन्तास्मत्पूर्वजा. करणग्रन्थकारा ॥

एतेन चाक्षुषेष्वेव ग्रहणादिषूपयुज्यते दृग्गणित, न तु तिथ्यानयन इत्यर्धजरतीयनयमनुरुन्धानानामुक्तिर्दूरतोऽपास्ता ॥

न ह्यस्मच्छास्त्रे ग्रहवेधाय यन्त्राण्युदीरितानीति बहवो मन्यन्ते विदेशीयभाषा व्यसनिन. । आ किमिदम्? परिविष्टान्नेन समग्रकूश्माण्डपिधानम् । अथवा नतेऽपराध्यन्ति । अत्रापराध्यति यन्त्राणां बहिरप्रकटत्वमेव । तानि कथ वा सम्पादयेरन् प्रभूतधनव्ययसुसाधानि भूपैकनिर्माप्यानि मनोरथमात्रधनैरस्माभि ॥

कालनिर्णायकेष्वनन्तेषु यन्त्रेषु कानि चन स्फुटानि यन्त्राणि गादितानि शिरोमणौ । तथाहि—

दिनगतकालावयवा ज्ञातुमशक्या यतो विना यन्त्रैः ।
वक्ष्ये यन्त्राणि तत. स्फुटानि सक्षेपतः कतिचित् ॥

इत्युपक्रम्य ॥

गोलो नाडीवलयं यष्टिश्शङ्कुर्घटीचक्रम् ।
चापं तुर्यं फलकं धीरेकं पारमार्थिकं यन्त्रम् ॥

इत्यन्तमिति ॥

को वा महाभागस्सचेतास्तानि रसातलमग्नानि समुद्धरिष्यति पूर्वपुरुषोक्तिप्रणयभूम्ना । अथवा कालो निरवधिः य को वा समुत्पन्नस्समुत्पत्स्यते वा? हन्तेदृशेऽपि काले सान्तर ग्रहलाघवं प्राचीनार्वाचीनस्फुटतरवेधयन्त्रैरेकोनविंशतिं वत्सरान् महता परिश्रमेण संशोध्य निरुपम किमपि ज्योतिर्गणितं शैलाद्रिवसुभू (१८७७) समे प्राणनाय क्रिस्तशके श्रीमान् केतकरवेङ्कटेशाभिधो ज्योतिर्विचित्तिलक. ॥

नेदमप्रत्यक्षं प्रेक्षावता, यत्—काश्युज्जयिन्यादिषु जनपदेषु राजभिस्समवस्थापिता ग्रहवेधशाला नियतेर्दुर्विपाकालुप्ता स्समभूवन्। अधुना जयपुरे तु तादृशी शाला समुज्जृम्भत इति ॥

तादृशी शालाऽस्मद्देशे सुतरामावश्यकी यहो कालादूहवधवैधुर्येणैव तदा तदाऽत्र ग्रहणादिषु विसवादा प्रचलन्ति। नैतद्दुष्कर वदान्यशिरोमणेरस्मन्महाराजस्य। किमस्ति विदितवेदितव्यस्य तस्य सविधे विज्ञाप्यम् ॥

अपिच—

आदित्यदासतनयस्तदवाप्तबोधः
कापित्थके (कालपि) सवितृलब्धवरप्रसाद ।
आवन्तिको मुनिमतान्यवलोक्य सम्यक्
होरां वराहमिहिरो रुचिरा चकार ॥

दिनकरवसिष्ठपूर्वान् विविधमुनीन्द्रान् प्रणम्य भक्त्याऽऽदौ।
जनकं गुरु च शास्त्रे येनास्मिन्न. कृतो बोधः ॥

इति च बृहज्जातकपञ्चसिद्धान्तिकयोरात्मनो रविवसिष्ठादिसिद्धान्तपरिशीलनात् स्वपितुरादित्यदासात् तरणेः प्रसादाच्च समधिगतां ज्योतिस्तन्त्रवैदग्धीं प्रख्यापयता श्रीमता वराहमिहिराचार्येण निज होरातन्त्रे प्रयुक्ता केन्द्र पणफरा पोक्लिमारकार्कि लेय जूक कौर्प्याद्याश्शब्दास्सांस्कृता एव। यतो बृहत्पराशरहोरायामेते शब्दाः प्रयुज्यन्ते[1] ॥ इति।

अतोऽमीषां श्रीक्भाषाशब्दत्वात् श्रीक्विद्वज्जनेभ्यो मेषादि द्वादशराशिषु विभागक्रमोविज्ञात इति वादो न विश्वसनीयः ॥

शास्त्रमिद त्रिविधम्—सिद्धान्तसंहिताहोरास्कन्धभेदैः।

---

[1] देशकालभाषातत्त्वविदा नेद हृदयंगमम् ॥ सं ॥

गणितस्कन्धः सिद्धान्तस्तन्त्रमिति हि पर्याया । यत्र कल्पादेर्ग्रहानयन स सिद्धान्त. । यत्र युगादेर्ग्रहानयन तत्तन्त्रम् । यत्र शकाद्ग्रहानयन तत्करणमिति च ग्रहगणिते त्रेधा विभागो दृश्यते । तत्त्रयम पिप्राथमिकस्कन्धात्मकमेव ॥

इत्थ त्रिस्कन्ध ज्योतिष बहुधा सर्वोपयोगीत्यस्मत्पूर्वजैर्भारतीयै', श्रीवराहमिहिरादिभिस्सांवत्सरमूर्धन्यैरार्षप्रबन्धानुसारिभिरमोघैः ग्रन्थैः परकोटिमधिरोप्यमाण विद्योतत इति सर्वमनवद्यम् ॥

प्रजावनसमुत्सुकैर्नयविदग्रिमैर्मन्त्रिभि
नयेन परिपालयन् धरणिमोजसामाकरः ।
अभङ्गुरदयानिधेर्यदुपतेर्दृशा वत्सरान्
शत यदुकुलोद्भवो जयतु कृष्णभूमीश्वर. ॥

इति माहिशूरमहीपतिवाणीप्रासादपाठशालायम् ।
ज्योतिश्शास्त्राध्यापकशेषकविः कौतुकादुपन्यास्थत् ॥

करूरु शेषाचार्य'

## संस्कृतविद्वत्परीक्षावृत्तान्तपत्रिका

श्रीमन्महीशूरमहाराजश्रीकृष्णराजसार्वभौमसमधिष्ठितायां अक्षय-संवत्सरीयनवरात्र महोत्सवानुबन्धिन्यां आश्वयुजशुक्ल द्वादश्यां सोम-वासरे श्रीमन्महाराज सन्निधौ निवेदित. विद्वत्परीक्षावृत्तान्तः ॥

महाप्रभो' भवदीयदिव्यशासनानुरोधेन सस्कृतविद्याभिवृद्धि-सभाद्वारा महीशूरराजधान्यां संस्कृतमहापाठशालाया निर्वर्तितायाः विद्वत्परीक्षाया वृत्तान्त महासन्निधौ विनिवेदयितुमवसरस्समभ्यर्थ्यते ॥

अस्मिन् सवत्सरे नवीनशासनानुरोधेनैव' मध्यमोत्तमकक्ष्या परीक्षाः निरवर्तिषत । तत्र परीक्षायै प्रवेशमीहमाना' विद्यार्थिन चतुश्चत्वारिंशत्सख्याका । तेष्वष्टत्रिंशत्सख्याका विद्यार्थिन. पर पर्यैक्ष्यन्त । सप्तविंशति विद्यार्थिन समुदतारिषुः ॥

तेषु द्वादश विद्यार्थिन महाराजसस्कृतमहापाठशालायामधी-तिनः । बेंगळूरु श्रीमच्चामराजेन्द्र संस्कृतमहापाठशालीय. एकः । बेंगळूरु श्रीशंकरमठीय महापाठशालीयास्त्रयः । चित्तूरु वेदशास्त्र-पाठशालीयौ द्वौ । चिदम्बरस्थपाठशालीय. एकः । अवशिष्टा अष्टौ विद्यार्थिन' एतद्देशीयै' देशान्तरीयैश्च पण्डितैस्स्वतन्त्रै' शिक्षामवाप्ताः परीक्षिता इति विभाग' ॥

एव रीत्या समुत्तीर्णानां यथावैदुष्य नियमानुरोधन महा-सन्निधानीयपारितोषिकाणि समुपगतवतामपि ये विशेषपारितोषिक-पात्रीभूताः ते पुनरेते—

श्री ॥ धर्मप्रवृत्त धर्माधिकारि नवीनं रामानुजाचार्य परिकल्पितं पञ्चाशद्रूपकरूप वेदपारितोषिकम्,

तथा

श्री॥ रायबहदूरु आर्काटु श्रीनिवासाचार्यनामाङ्कित बेंगळूरु मुजरायि सेक्रिटेरियेट् कन्दसामिनायकीयं पञ्चाशद्रूप्यमूल्य कनकवीरशृखल च चित्तरु वेदशास्त्रपाठशाला विद्यार्थी श्री॥ कृष्णघनपाठी समार्जयत्,

श्री॥ रिटैर्डु चीफ् इञ्जनीयर् राजसभाभूषण कर्पूर श्रीनिवासरायपरिकल्पित तर्कशास्त्रपारितोषिक शतरूप्यात्मकम्,

तथा

अस्मिन्नेव वत्सेर श्रीमहाराजाज्ञां समधिगम्य परिकल्पितं श्री॥ ए. जि कृष्णस्वामिरायनामाङ्कितं सर्वोत्तमोत्तीर्णपारितोषिकं षष्टिरूप्यमूल्यं सुवर्णपदकम्,

तथा

श्री॥ रिटैर्डु इन्स्पेक्टर् एस्. रंगाचार्यपरिकल्पितं तर्कवेदान्तपारितोषिकं पञ्चाशद्रूप्यरूपम्,

तथा

श्री॥ धर्माधिकारि पण्डितरत्नं तर्कतीर्थ कस्तूरिरंगाचार्यनामाङ्कितं प्राचीनन्यायपारितोषिक त्रिंशद्रूप्यपरिमितं च, इत्येतानि चत्वार्यपि बेंगळूरु श्री शंकरमठीयमहापाठशाला विद्यार्थी श्री॥ विद्वान् रामचन्द्रशास्त्री समविन्दत ॥

श्री॥ विद्वान् पेरियस्वामिनामाङ्कितं साहित्यपारितोषिक षष्टिरूप्यरूपम्,

तथा

श्री॥ परकालमठे गौरवकार्यदर्शिना महाविदुषा तिरुवळ्ळूरु श्रीनिवासराघवाचार्येण परिकल्पित विशिष्टाद्वैतवेदान्तपारितोषिकं पञ्चा-

शद्रूप्यपरिमित च महाराजसंस्कृतमहापाठशाला विद्यार्थी श्री॥ कोटीश्वर-नरसिंहाचार्य. समलभत ॥

अरमने मुसाहेबर् रिजिमेंट्दार् श्री॥ कृष्णरायनामाङ्किते द्वैतवेदान्तपारितोषिके पञ्चविंशतिरूप्यरूपमशं श्री॥ विद्वान् रायदुर्ग भीमसेनाचार्य. समपादयत् ॥

एवमपि अवशिष्टानि सप्त पारितोषिकाणि तैस्तैर्महाशयैरुदारहृदयै. परिकल्पितानि नियमानुरोधिपात्राभावेन संगृहीतानि पर सन्ति ॥

---

## श्रीमन्महाराजसन्निधानीय संभावना प्रकारः

| संख्या. | नामधेयम् | शास्त्रनाम | अध्ययनस्थलम् | सम्मान रूप्याणि | विशेषः |
|---|---|---|---|---|---|
| | | मध्यमपरीक्षा. | | | |
| 1 | नाविल्पाक श्रीनिवासगोपालाचार्य | साहित्य | मैसूरु महापाठशाला | 50 | |
| 2 | सोमनहळ्ळि सुब्बराय | ,, | मैसूरु महापाठशाला | 50 | |
| 3 | कुंभकोणं नागराजाचार्य | ,, | मैसूरु महापाठशाला | 50 | |
| 4 | के पि नारायणशास्त्री | ,, | श्रीशंकर महापाठशाला | 50 | |
| 5 | के एस् नरसिंहशास्त्री | ,, | चिदंबर पाठशाला | 50 | |
| 6 | होसेनहळ्ळि श्रीनिवासाचार्य | ,, | मैसूरु, स्वव्यासंग | 50 | |
| 7 | आर् टि श्रीनिवासशास्त्री | प्राचीन न्याय | मैसूरु, स्वव्यासंग | 50 | |
| 8 | वेंकटेशशास्त्री | पूर्वमीमांसा | श्रीशंकरमठ महापाठशाला | 50 | |
| 9 | रा नारायणस्वामि दीक्षित | अद्वैतवेदान्त | मैसूरु महापाठशाला | 50 | |
| 10 | सु. नारायणशास्त्री | अद्वैतवेदान्त | मैसूरु महापाठशाला | 50 | |
| 11 | गोमठं तिरुनारणय्यंगार् | विशिष्टाद्वैतवेदान्त | मैसूरु महापाठशाला | 50 | |
| 12 | प. रंगस्वामय्यंगार् (श्रीरंग) | ,, | श्रीरंगं, स्वव्यासंग | 50 | |

| | | | | |
|---|---|---|---|---|
| 13 | रयदुर्ग भीमसेनाचार्य | द्वैतवेदान्त | मैसूरु महापाठशाला | 50 |
| 14 | यन्. सांबशिवघनपाठी | यजुर्वेद क्रमान्त | काळि स्वव्यासंग | 50 |
| 15 | ह सुब्रह्मण्यघनपाठी | ,, | चित्तूरु वेदशास्त्र महापाठशाला | 50 |
| 16 | कृष्णघनपाठी | ,, | तिरुवय्यार्, स्वव्यासंग | 50 |
| 17 | कल्याणघनपाठी | ,, | पुत्तूरु, स्वव्यासग | 50 |
| 18 | शे. शठगोपाचार्य | ,, | कृष्णापुर, स्वव्यासग | 40 |
| 19 | रामभद्रघनपाटी | ,, | पियाळि, स्वव्यासग | 40 |
| 20 | यस् काशीपतिशास्त्री | शुक्लयजुर्वेदक्रमान्त | बेंगळूरु श्री चामराजेद्र वेद महा-पाठशाला | 40 |

कृष्णयजुर्वेदे क्रमान्तपरीक्षायां चत्वार उत्तमकक्ष्यायामुत्तीर्णा

उत्तमपरीक्षा.

| | | | | |
|---|---|---|---|---|
| 21 | कोठीश्वर नरसिंहाचार्य | साहित्य | मैसूरु महापाठशाला | 100 |
| 22 | सालिग्राम सीताराशास्त्री | ,, | ,, | 100 |
| 23 | शर्के रामस्वामैय्यगार् | , | ,, | 100 |
| 24 | वि एस रामचंद्रशास्त्री | नवीनन्याय | श्रीशंकरमठ महापाठशाला | 100 |
| 25 | होसूरु नरसिंहभट्ट | ऋग्वेद स्मार्त प्रयोगः | , | 100 |
| 26 | एन वि. कृष्णघनपाठि | यजुर्वेद सलक्षण घनान्त | चित्तूरु वेदशास्त्र महापाठशाला | 100 |
| 27 | अ रामचद्र दीक्षित | सामवेदसलक्षण | मैसूरु महापाठशाला | 60 |

## पञ्चाशत्संवत्सरमहोत्सववृत्तान्त

एतस्मिन्नेव संवत्सरे आश्वयुजशुक्लचतुर्दश्यां बुधवासरे स एष महोत्सवः प्रातः काले श्री विद्यागणपत्यभिषेकादिपूजापुरस्सर. ससम्भ्रम प्रारभ्यत । तत' विद्यार्थिसभायामाशुकवनभाषणविषया स्पर्धा मध्याह्नात् पर पण्डितसभाया पूर्वमीमासा-न्याय-वेदान्त-व्याकरणादिशास्त्रेषु प्राचीन पन्थानमनुसृत्य वाक्यार्थकोलाहलः साय काले च श्रीमता महाराजेन समधिष्ठितायां महासभायामय महोत्सवोऽभूतपूर्वः प्राचालीत् ॥

यथा—पादत्रयाधिकपञ्चघण्ठावादनसमये श्रीमान् राजाधिराजः श्रीकृष्णराजसार्वभौमः समुचितसम्प्रदायवेषसमलंकृतः परिमितपरिवार. दिव्याश्वचतुष्टयवाह्यमानसुन्दरस्यन्दनसमारूढो यावत् सभामहाद्वारमागच्छति तावत् महारजागमनं प्रतीक्षमाणा. पाठशालाकार्यनिर्वाहकसभाध्यक्ष–पुराध्यक्ष–देशाध्यक्षादयः महता जयशब्देन महाराज प्रत्याभिगम्य मनोहरे सभामन्दिरे प्राय राजकीयसर्वाधिकारिसपूर्णे सकलपण्डितमण्डलमाण्डिते निखिलपौरवर्गकलकलपरिकलिते वैदुष्यभूषयोषाजनपरिभूषिते दिव्यमग्र्यमासनमासादयामासुः ॥

अथ चतुरेषु चतुर्षु बालकेषु स्वागतपद्यानि पठितवत्सु श्री ॥ महाविद्वान् करपत्तूरु वेंकटरामशास्त्री, श्री ॥ विद्वान् राल्लपल्लि अनन्त कृष्णशर्मा च प्रकृतोत्सवविषयकैः पुरः प्रकाशितैः श्लोकैः साध्यक्षसभामानन्दयामासतुः । तत कर्णाटभाषाकविशिरोमणिना राजकवि भूषणेन श्रीमता लिङ्गराजेन प्रणीतानां कर्णाटकभाषापद्यानां पठनानन्तर महापठशालापञ्चाशत्संवत्सरवृत्तान्त महोत्सवप्रदीपिकाभिधा-

नायां पूर्वसंचिकायां प्रकाशितं श्री ।। महाविद्वान् हो ।। शेषाचार्योः सुस्पष्टमावेदयन् ।।

पाठशालाकार्यनिर्वाहकसभाध्यक्ष. श्री ।। एस्. पि. राजगोपालाचार्यवर्य' श्रीविद्यागणपतिप्रमृातिचित्रविचित्रित सुवर्णमयसरस्वतीविग्रहपरिगृहीताशिरोभाग पञ्चाशत्सवत्सरमहोत्सवप्रदीपिकापुस्तकयुगळपरिगर्भित रजतमयपेटिकाख्य प्राभृतं महाराजाय सविनय सामोद समितिप्रातिनिध्येन समार्पयत् ।।

ततः पर सभाध्यक्षो महाराज. अस्यामेवसंचिकयां प्रकाशित दिव्यमुत्तर देशभाषायां प्रकाश्य नैजेन विशुद्धेन शुभमयेन हृदयेन पाठशालाया मङ्गलमाशास्य श्रीविद्यागणपतिसन्निधौ वेदमंन्त्रपुरस्सरा' दिव्या आशिषः स्वीकृत्य महोत्सवं साङ्ग समग्रीकृत्य सार्धसप्तघण्टासमये स्वय सदनमलंचकार ।।

अयि महाभागाः ! नैतावता उत्सवसम्भ्रमः परिसमाप्त इति मन्तव्य, परास्मिन्नप्यहनि अपूर्वतमाः कतिपयविशेषाः संवृत्ताः । तथाहि—उत्तरस्मिन् दिवसे प्रातः दशमघण्टावादनावसरे महाराजोऽसौ साक्षात्स्वय पाठशालापण्डितैः आस्थानमहापण्डितैश्च सह भावचित्रपरिग्रहार्थं सन्निधाय कृपापरिपूर्णावलोकनेन सकलजनहृदयगमेन मन्दहासेन चिरकालमासेचनकेन भावनीयेन सर्वानानन्दयामास ।।

तथैव महापाठशालायाः संस्कृतविद्यायाश्च बहुना कालेन बहुप्रकारैरुपकारैरभिवर्धयित्री श्री वाणीविलाससन्निधानाभिधाना महती माता महाराजजनयित्री महोत्सवपरिपूर्त्यै ब्राह्मणसन्तर्पणपरिकरं समनुगृह्य मध्याह्नसमये श्रीमन्त श्वेतवराहं कल्पाधिपातिमर्चारूपिणं भगवन्तं पाठशालामन्दिरे सन्निधाप्य स्वैरुपचारैरुपचार्य अश्रुतानुभूतपूर्वं ब्राह्मणसमाराधनमकारयत् ।

ततश्च सर्वेऽपि विद्वद्ब्राह्मणाः स्वस्तिवाचनवेदघोषपुरस्सरं सपरिवारं महाराजं आशीर्वादेन सवादविसंवादरहितेन अभिनन्द्य मन्त्रपरिपूतानक्षतान् राजकुलायानुगृह्य सतुष्टचित्ताः महोत्सवं सस्मृत्य सस्मृत्य विस्मयोत्फुल्ललोचनाः "अयं महोत्सवः क्वापि नभूतो न भविष्यति" इति प्रशसन्तः स्वस्व सदनमशून्यमकुर्वन्त ॥

इति भद्रम्

---

## श्रीमन्महाराजसंस्कृतमहापाठशालायाः पञ्चाशत्संवत्सरमहोत्सवसमये पठिताः श्लोकाः.

श्रीमच्चामहीक्षिदीक्षणजनिः वाणीविलासस्थिर
प्रेमार्द्रेक्षणवारिजाततितिः कालक्रमेणोद्गतः ।
अन्नाद्यैः कुसुमैः धनैरतितरां शारीररक्षाकर
विद्यारूपफलोत्तमं च दधते विद्यालयः पादपः ॥ १ ॥

यत्र त्रय्यथ तत्तदङ्गसहिताः काणादमुख्याः कलाः
प्रख्यातैः विबुधोत्तमैः श्रुतिशिरस्सांख्यादयोऽध्यापिताः ।
विद्वत्त्वं च गता अधीतिमणयः सम्मानिता मानवैः
नानादिक्ष्वधिकारलाभत इमे पुष्णन्ति दैवीं कलाम् ॥ २ ॥

किंच

रङ्गाचार्यवरैरुदारहृदयैः शेषाद्रिवर्यैरपि
विद्यादानफलं विवर्धयिषुभिश्श्रद्धाय धीमत्तमैः ।
प्राचीनैः सचिवोत्तमैरिह परिष्कारो महानाहितः
श्रीमद्राजकृपात एवमनिशं ववर्द्ध विद्यालयः ॥ ३ ॥

अस्मद्राजवरस्य यत्र महित' पट्टाभिषेकोत्सव
तस्मिन् श्रीरथसप्तमीशुभदिने सोत्साहमत्रालये ।
प्रत्यब्द वरपारितोषिकचयो विद्यार्थिना भूयमाम्
आर्हन्तीमनुसृत्य दीयत उरूकृत्यास्तिकाना मुदम ॥ ४ ॥

विद्यासिद्धिगणाधिपो निगमवाक्स्वस्त्यादिकोद्धोषणैः
गीतप्रायबहुस्तवैश्च सततं जेगीयमानोबुधैः ।
राजाशीर्वचनैरमोघफलदैं प्रीति परा प्रापित.
श्रीमद्राजवरेण्यभद्रकलनायात्र स्वय भासते ॥ ५ ॥

उत्तीर्णा इह वेदशास्त्रनिचये पाण्डित्यमासादिताः
औपाध्यायकमाप्य पाठनविधौ ख्याता बुधा भूरिश' ।
विद्वद्रत्न विशारदादि विरुदैराभूषणै. भूषिताः
मेदिन्यां महती प्रथामधिगताः सौख्येन राराजति ॥ ६ ॥

एव धर्म्यपथे निरन्तरमिमां वीक्ष्य प्रवृत्तिं स्थिराम्
आयुर्दीर्घमनामयं सुखमयं कीर्तिं परां निर्मलाम् ।
सत्सन्तानपरम्परामतितरां राद्धा समृद्धिं ध्रुवाम्
चामुण्डा परदेवता वितनुतां श्रीकृष्णराजप्रभो ॥ ७ ॥

पञ्चाशत्तमवत्सरोत्सव समारम्भेऽस्य विद्यालय
स्यास्थाने महति प्रभोरनितरासाधारणेसन्निधौ ।
एवं वेङ्कटरामशास्त्रिरचित सन्मङ्गळाशसनं
भक्त्याद्दत्य समर्पितं विनयतो वैपश्चिते मण्डले ॥ ८ ॥

श्रीमन्मातृमहाशयायुवमहीपालादिषु प्रत्यहं
सुश्लोक्यस्पृहणीयपुण्यचरितेष्वानन्द आस्फाल्यताम् ।

मिर्जामात्यधुरस्थले ध्रुवतरा गर्जन्तु सत्कीर्तय
प्राज्यं भोज्यमिह प्रवृद्धिमयतां वर्षेण राज्यावनौ ॥ ९ ॥

इति, कल्पतूरु वेङ्कटरामशास्त्री.

अथ च अपरे श्लोकाः

श्रीमच्चामहीमहेन्द्रमणिना संस्थापिता शाश्वती
कीर्तिं मूर्तिमती निजा परिणता श्रीपाठशालात्मना ।
विप्रेभ्यः प्रतिपादिता सुमहती राज्याध्वरे दक्षिणा
सेयं कृष्णमहीभुजा चिरतरं क्षेमाय नः कल्पताम् ॥ १ ॥

अक्षीणोज्ज्वलयौवनस्तव जयत्याजन्मनः प्रौढिमा
देवी त्वां त्रिदशेश्वरी भगवती वाग्देवताऽधीक्षते ।
ज्ञानम्तन्यसुधाप्रवर्षिणि महाश्रीपाठशालेऽम्ब ते
पञ्चाशच्छरदा गतेति गणना का? निर्जरा त्वं ह्यसि ॥ २ ॥

त्वां किंचित्समयोपपन्नमधुना सम्प्रार्थयामो वयं
तृप्तिं मा व्रज केवलं प्रवचनैर्दानैः परीक्षादिभिः ।
आस्माकं यदनन्यदुर्लभतरं तेज पुरा श्रूयते
तस्याद्योद्धरणं परैरसुकरं त्वत्तस्समीहामहे ॥ ३ ॥

शापानुग्रहयोरतन्द्रविभवं यातं तपः कुत्र तत्
यस्याग्रेऽभवन् पुरा तृणसमा दम्भोलिदेवश्रियः ।
तद्वा चक्षुरपार्थिवं क्वनु गतं त्रैविध्यभिन्नस्सदा
कालोऽयं ननु केवलाद्यतनतां नीतः पुरा यद्बलात् ॥ ४ ॥

सर्वाङ्गेषु समग्रमप्रतिहतं तद्भारतं वैभवं
कुत्रान्तर्हितमद्य यत्र सकलोऽप्यन्यो बिभिक्षे जनः ।

पश्यास्मानधुना नितान्तमलसा नाकारमात्रैर्नरान्
येषां निष्फलयाचनापरिभवैश्चूर्णीकृत पौरुषम् ॥ ५ ॥
तस्मात्सज्जीभवतु भवती पुस्तके मस्तके वा
जीर्यन्तीस्ताः पुनरपि कला. कार्यशौर्ये नियोक्तुम् ।
ब्राह्मं तेजश्शमदमधनं वर्धतां तेन भूयः
श्रीकृष्णेन्द्रे फलतु बहुधा सभृताऽस्माकमाशीः ॥ ६ ॥

रा. अनन्तकृष्णशर्मा.

---

## इदमेक शोकस्थानम्

महापाठशालायामस्या अद्वैतसिद्धान्तव्याख्यानपीठमष्टभिस्संवत्सरैरलंकृत्य नातिचिरेण विश्रान्ता पण्डितोत्तमा महामहोपाध्याय वेदान्तविशारदेत्याद्यनन्तबिरुदविभूषिताः पञ्चापगेशशास्त्रिणः अस्मिन्नेव वत्सरे अक्टोबर् मासे ब्रह्मीभूता इति वार्ता सर्वेषां सर्वदा मनः कृन्ततीति ॥

---

## इदमपर हर्षस्थानम्.

पाठशालायां ज्योतिश्शास्त्राध्यापयिता श्री ॥ करूरु शेषाचार्यः साहित्यभागाध्यापयिता श्री ॥ भाग्यपल्लि श्रीनिवासाचार्यश्च प्रधानोपाध्यायपदवीमारुक्षतामिति ॥

---

## क्रय्यसंस्कृतपुस्तकानि.

| | |
|---|---|
| संस्कृतबालशिक्षा | ० ३ |
| सरस्वताप्रार्थना, श्यामला दण्डकं, नवरत्नमालाच | ०२ |
| शब्दमञ्जरी (दृढपत्रात्मिका) | ० ६ |
| यजुर्वेदसंन्ध्यावन्दनम् | ० २ |
| आदित्यहृदयम् | ० १ |
| महाकवि बोधायनकृत-भगवदज्जुकनाटकम् | ० ६ |
| शिवानन्दलहरी | ० २ |
| रुद्रनमकचमकम् | ० २ |
| सौन्दर्यलहरी | ० २ |
| पञ्चसूक्तानि | ० २ |
| रामकर्णामृतम् | ० ८ |
| बालरामायणम् | ० २ |
| विवेकचूडामणि | ० ८ |
| कृष्णकर्णामृतम् | ० ६ |
| ,, आंग्लवादासहितम् | १ ८ |
| शिवकवचम् | ० २ |
| यजुर्वेदाह्निकम् | ० ६ |
| श्रीवैष्णवाह्निकम | ० ८ |
| सूर्यनमस्कारमन्त्रा ऋयुच-ब्रह्मयज्ञचाहितास्सस्वराश्च | ० १ |
| लक्ष्मीनृसिंहस्तोत्रम् ... | ० १ |
| श्रीगोविन्दद्वादश (चतुर्दश) मञ्जरिकास्तोत्रम् | ० १ |
| मुकुन्दमाला | ० १ |
| हिन्दी बालशिक्षा | ० ३ |
| हिन्दी प्रथमवाचकम् | ० ८ |
| भर्तृहरिशतकत्रय, मूलम् | ० ८ |
| विक्रमार्कचरित्रम् | ० १० |
| संस्कृतान्ध्रवर्णबोधिनी, पत्रफलका | ० २ |
| श्रीलक्ष्मीनारायणहृदयं | ० ३ |
| ब्रह्मसूत्राणि, मूलम् | ० ३ |

॥ नामावळीसहितानि ॥

| | |
|---|---|
| विष्णुसहस्रनामस्तोत्रम् | ० ४ |
| ललितासहस्रनामस्तोत्रम | ० ६ |
| लक्ष्मीसहस्रनामस्तोत्रम् | ० ४ |
| सुब्रह्मण्यसहस्रनामस्तोत्रं | ० ४ |
| शिवसहस्रनामस्तोत्रम् | ० ४ |
| वेङ्कटेशस्तोत्रम् | ० ४ |
| अन्नपूर्णासहस्रनामस्तोत्र | ० ४ |
| आंजनेयसहस्रनामस्तोत्र | ० ४ |
| गणपतिसहस्रनामस्तोत्रं | ० ४ |

वाविळ्ळ. रामस्वामिशास्त्रिलु अण्ड् सन्स्,
२९२, एस्प्लनेड् चेन्नपुरी

---

# ವಿಶೇಷ ಸೂಚನಾ

1 ಮಹಾಪಾಠಶಾಲೆಯ ಪಂಚಾಶತ್ಸಂವತ್ಸರ ಮಹೋತ್ಸವದ ಜ್ಞಾಪಕಾರ್ಥವಾದ ಸಂಚಿಕೆಯು ಪ್ರತ್ಯೇಕ ಬಿಕರಿಗೆ ಸಿದ್ಧವಾಗಿದೆ ಸುಂದರವಾದ ಐದು ಭಾವಚಿತ್ರಗಳಿಂದಲಂಕೃತವಾಗಿ ಉತ್ತಮವಾದ ಕಾಗದದಲ್ಲಿ ಮುದ್ರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಉದ್ದಾಮ ಪಂಡಿತರಿಂದ ರಚಿತಗಳಾದ ಉಪನ್ಯಾಸಗಳಿಂದ ಭರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಸರ್ವರೂ ಗ್ರಹಿಸತಕ್ಕುದಾಗಿದೆ ಕೆಲವು ಪ್ರತಿಗಳು ಮಾತ್ರ ಉಳಿದಿರುವುದರಿಂದ ಇಷ್ಟವುಳ್ಳವರು ಶೀಘ್ರದಲ್ಲಿಯೇ ಕೆಳಗಿನ ವಿಳಾಸಕ್ಕೆ ಬರೆದು ಪಡೆಯಬಹುದು ಬೆಲೆ ಎಂಟಾಣೆ, ಅಂಚೆ ವೆಚ್ಚ ಎರಡಾಣೆ

2 ಇದುವರೆಗೂ ನಮ್ಮ ಪತ್ರಿಕೆಗೆ ಚಂದಾದಾರರಾಗುವುದರ ಮೂಲಕ ಪ್ರೋತ್ಸಾಹಕೊಟ್ಟ ಮಹನೀಯರಿಗೆ ಬಹಳ ಕೃತಜ್ಞರಾಗಿದ್ದೇವೆ ಮುಂದೆಯೂ ಹೀಗೆಯೇ ಸಹಾಯಮಾಡಿ, ಕ್ಷೀಣದಶೆಗೆ ಬರುತ್ತಿರುವ ಗೀರ್ವಾಣ ವಿದ್ಯೆಯನ್ನು ಕೈಲಾದಷ್ಟು ಉದ್ಧಾರಮಾಡಬೇಕಾಗಿ ಪ್ರಾರ್ಥನೆ

ಮುಂದಿನ ಅಂದರೆ ಏಪ್ರಿರ್ ಸಂಚಿಕೆಯನ್ನು ವಿ ಪಿ ಮೂಲಕ ಕಳುಹಿಸಲಾಗುತ್ತೆ, ಆದರೆ ಅದಕ್ಕೆ ಮುಂಚೆಯೇ ಕೆಳಗೆ ಕಂಡಂತೆ ಚಂದಾ ಮೊಬಲಗನ್ನು ಮನಿಯಾರ್ಡರು ಮೂಲಕ ರವಾನಿಸಿದರೆ ಚಂದಾದಾರರಿಗೆ ಸ್ವಲ್ಪಮಟ್ಟಿಗೆ (ಎರಡಾಣೆ) ಉಳಿತಾಯವಾಗುವುದೆಂದು ಸೂಚನೆ

| | | | | | |
|---|---|---|---|---|---|
| ಚಂದಾ—ಮೈಸೂರು ದೇಶದೊಳಗೆ | .. | 1 | 8 | 0 |
| ,, ,, ಹೊರಗ | | 1 | 10 | 0 |
| ,, ಸೀಮೆಯಲ್ಲಿ | | 3 | ಷಿಲಿಂಗ್. | |

ಚಕ್ರವರ್ತಿ ರಾಮಾನುಜಯ್ಯಂಗಾರ್ಯ,
ಅಧ್ಯಕ್ಷ,
ಸಂಸ್ಕೃತ ಮಹಾಪಾಠಶಾಲಾ, ಮೈಸೂರು.

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिकायाः
विनिमयविषयीभूताः एताः पत्रिकाः.

---

१ भंडारकर् रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना.
२ जर्नल् आफ् ओरियटल् रिसर्च्, मद्रासु
३ प्रबुद्धकर्णाटक, बेंगळूरु
४ मिथिक् सोसैटि जर्नल्, बेंगळूरु
५. यूनिवर्सिटि यूनियन् म्यागसीन्, मैसूरु
६ एम् टि बि आर्ट्स्कालेजुम्याग्जीयन्, सूरत्.
७. ओरियंटल् कालेजु म्यागसीन्, लाहोर्
८. सद्बोधचन्द्रिके, आनन्दवन.
९. श्री शारदा, शृंगेरि.
१०. कादम्बरीसंग्रह, चामराजनगर.
११. सनातनधर्मसंजीविनी, मैसूरु

---

# सू च ना

"मानमेयरहस्यश्लोकवार्तिकम्"

इति नाम कश्चिन्महाप्रबन्ध आनुष्टुभश्लोकरूपेण संगृहीतः सर्वसिद्धान्तसारसंग्रहरूप परस्सहस्रविषयविभक्तः एतत्पत्रिका-संपादकेन प्रणीत मुद्रित प्रकाशितश्चास्ति। मूल्यमस्य (6) षट् रूपकाणि. प्रापणभृति पृथगेव

उपलब्धिस्थानं—पत्रिकासंपादकः.

## ಶ್ರೀ ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ (ಮಾಸಪತ್ರಿಕೆ).

ಈ ಪತ್ರಿಕೆಯು ಪ್ರಾರಂಭವಾಗಿ ಒಂಭತ್ತು ವರ್ಷಗಳಾದುವು ಇದರಲ್ಲಿ ಪ್ರಕಟವಾಗತಕ್ಕ ವಿಷಯಗಳು ಅತ್ಯುತ್ಕೃಷ್ಟವಾದುವು ಸರ್ವರಿಗೂ ತಿಳಿಯುವಂತೆ ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಅನೇಕ ಪಂಡಿತರುಗಳಿಂದ ವಿಷಯಗಳು ಬರೆಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯಂತೆ ನಮ್ಮಲ್ಲಿ ಮತಪ್ರಕಾಶಕವಾದುದು ಮತ್ತಾವುದೂ ಇರುವುದಿಲ್ಲ ಇದರಲ್ಲಿ ಮಧ್ವಮತಕ್ಕೆ ಸಮ್ಬಂಧಿಸಿದ ವಿಷಯಗಳಲ್ಲದೆ, ಇತರ ಮತಗಳ ಪ್ರಮೇಯಗಳೂ, ನೀತಿ, ಧರ್ಮ, ಪುರಾಣೇತಿಹಾಸಗಳಲ್ಲಿ ಕಂಡುಬರುವ ಅನೇಕ ವಿಷಯಗಳೂ ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯನ್ನು ಆದರಿಸುವಂತೆ ಸರ್ವರೂ ಪ್ರಾರ್ಥಿಸಲ್ಪಡುತ್ತಾರೆ

ಇದರ ವಾರ್ಷಿಕಚಂದಾ ರೂ ೨-೪-೦ (ಟಪ್ಪಾಲು ಸಮೇತ) ಪೋಷಕರು ೧ನೇ ತರಗತಿ ರೂ ೧೦-೦-೦ ೨ನೇ ತರಗತಿ ರೂ ೫-೦-೦ ಹಿಂದಿನ ಸಂಪುಟಗಳನ್ನಪೇಕ್ಷಿಸುವವರು ಬರೆದು ತರಿಸಿಕೊಳ್ಳಬಹುದು.

ಕೆ. ವ್ಯಾಸಾಚಾರ್ಯ, ಬಿ ಎ,

ಕಾರ್ಯದರ್ಶಿ, ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ ಸಭಾ, ಮೈಸೂರು.

॥ श्री ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

# विषयसूचना





## विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम —संस्कृतविद्याभिमानिन पुरुषप्रवरा यं कचन विषयमधिकृत्य संस्कृतभाषामय अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकमितं कस्याप्यनुद्वेगकर अवर्चीनपूर्व कालदेशदशानुगुण प्रपञ्चोपकारकरं धर्माद्यविरुद्ध 'जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्त , तेभ्यो महद्भ्य समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यास पारयाम प्रकाशायतुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवनन त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दान च मधुरा च वाक् ॥

सपादकस्य.

---

## मूल्यप्रकारः

१. अस्या पत्रिकाया वार्षिक आग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम् (भारतमण्डले.)
२ विद्यार्थिना पुन एकरूप्यकम्
३ विभक्तदेशे सपादरूप्यद्वयम् (3 s.) प्रापणभृति पृथक्.

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यंगार्,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः मैसूरु.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा.



कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः

(ईशोपनिषत्)

संपुट-३] एप्रिल् १९२७ [लघ्विका-२

## श्रीकृष्णनृपोदयप्रबन्धः.



चन्द्रांशुगौरवसना धवलारविन्दसच्छायकायरुचिराऽऽस्थितराजहंसी ।
मुक्तामणीतरलहारलताभिरामा चित्ते ममास्तु चतुरास्यकलावधूटी ॥

शेखरीकृतमन्दारा सुमसन्तानमालिनी ।
भक्तकाङ्क्षितकल्पद्रुः हराङ्गहरिचन्दनम् ॥
पारिजातसुमस्मेरा कृष्णेन्द्रकुलदैवतम् ।
चामुण्डा भाति शैलाग्रे वाटीव सुरभूरुहाम् ॥

नद्यम्बुवृष्ट्यम्बुसमृद्धसस्यं खनिप्रसूताखिललोहरत्नम् ।
कर्णाटराज्यं कमनीयशिल्पं केनोपमीयेत निसर्गरम्यम् ॥

उर्वरावर्षुकाम्भोदमेदुरे रोदसी यत· ।
सस्याघातो मुष्टिवधो यत्र न स्यात्क्रियावताम् ॥

विचित्रोदात्तदृश्यौघकीर्णकर्णाटमण्डले ।
महीशूरपुरी नाम राजधानी विराजते ॥

महाराज

यदुपूर्वैरस्तदोषैः नित्य प्रकृतिदक्षिणैः ।
धर्मोच्चैर्नृपैरेषा स्वाशाभिरिव वर्धिता ॥

तेषां कुले प्रादुरासीत् स श्रीमान् कृष्णभूपति· ।
यस्य प्रसाधनायैव न भोगाय वसुंधरा ॥

रेखारथाङ्गचिह्नेन विनतानन्दवाहिना ।
सत्त्वाधिकेन विभुना लक्ष्मीसहचरायितम् ॥

येन नीतिमता राज्ञा प्रजा आसन्ननीतयः ।
अलुब्धेन समृद्धार्थाः वत्सलेन सुखैधिताः ॥

मैत्रेण चक्षुषा पश्यन् भूतानि मधुरं वदन् ।
यथेच्छमुपकुर्वाणो धर्मकोशं जुगोप सः ॥

दयारसपरीवाहः प्रसादः किमु मूर्तिमान् ।
शरीरिणी वा किं शान्तिः धर्मः किं कायवानयम् ॥

कोशः शास्त्राभिसधीनां प्रतिभायाः परायणम् ।
सौजन्यजन्मसदनं वात्सल्यस्य निवासभूः ॥

दयालुरनघश्शान्तः क्षमी दाता प्रभुर्गुरुः ।
किमयं न हरिः साक्षात् चरिष्णुर्धरणीतले ॥

पित्र्यसिंहासनारूढे तस्मिन् श्रीकृष्णभूपतौ ।
आसन्नवनवोन्मेषाः प्रजानां सम्पदोऽखिलाः ॥

पारीणास्सर्वशास्त्रेषु धुरीणास्सर्वकर्मसु ।
आत्मनीनाः स्वधर्मेषु समेधन्ते प्रजास्सुखम् ॥

अमोल्लङ्घितमर्यादा नित्यमुत्पथगामिनः ।
धर्मसेतुविभेत्तारः कुपूरा एव केवलम् ॥

उपसर्गो ग्रहेष्वेव द्विरदेष्वेव मत्तता ।
कौटिल्यं भुजगेष्वेव शङ्खेष्वेवापरक्तता ॥

नित्योत्थानवता महीशगुरुणा श्रीचामराजेन ये
प्रारम्भास्सुखहेतवः समभवन् गुप्ताः प्ररोहा इव ।
ते संप्रत्युपचीयमानविभवाः श्रीकृष्णभूमीपतेः
उत्साहेन समं स्वयं ववृधिरे कालोप्तबीजोपमाः ॥

विद्याः कलाः विविधयन्त्रवणिक्पथानि कौशेयतन्तुरचनावयनादिकानि ।
वार्ताकुसीदपणबन्धगजग्रहादीन् प्रावर्तयन्नृपवरो निजदेशवृद्ध्यै ॥

काश्मीरमुख्यविषयेषु चरन् स राजा यद्यद्गुणाधिकमपश्यदुदारचेताः ।
प्रावर्तयत्तदखिलं शतशः स्वराज्ये सर्वातिशायि निजराज्यमसौ चिकीर्षुः ॥

## देशपरिष्कारः

नलिनीव समाश्रिता श्रिया सुचरित्रेव न चान्यपीडिता ।
वसुधेव विचित्रदर्शिनी प्रचकाशे नगरी प्रसाधिता ॥

हरितारुणपाण्डुपल्लवाः कुसुमामोदनिचोलितान्तराः ।
स्थगितार्कमरीचिशीतला प्रमदारामभुवः प्रसाधिताः ॥

अशोककुन्दोत्पलशक्रचापैरुन्निद्रचाम्पेयतटिल्लताभिः ।
पुष्पासवासारनगाग्रवृन्दैः प्रावृड्विडम्बं तनुते वनान्तः ॥

मरन्दलालासलिलोक्षिताङ्गः सन्धयोन्मिषत्कैरवमुग्धहासः ।
आलम्ब्य सायतनमल्लिकालिं मरुत्किशोरश्शनकैरुपैति ॥

यथाभिलाषं विनिकृत्तशाखैः कुरङ्गमातङ्गपतङ्गरूपैः ।
सवर्धितैर्बालतरुप्रकाण्डैः विराजते निष्कुटभूमिभागः ॥

सलिलमसृणनीलग्रावसंबद्धमूलं रजतधवलचित्रप्रांशुदण्डाग्रलग्नम् ।
भ्रमणरयविकीर्णैरुन्मुखैस्तोयजालैः ग्लपयति दिनतापं वारियन्त्रं द्रुमाणाम् ॥

प्रत्यूषे रविकिरणैस्सशक्रचापाः मध्याह्ने द्रुतकनकाभकान्तिरम्याः ।
सन्ध्यायामरुणदुकूलपट्टिकाभाः दृश्यन्ते भ्रमणरयेण वारिधाराः ॥

विपुलाः शतहस्तविस्तृताः मसृणा कूर्मशरीरसन्निभाः ।
भुजगाधिपभोगसुन्दराः पुरमार्गाः प्रविभान्ति सर्वतः ॥

निशि नीलतरुच्छायः प्रदीपकलिकावृतः ।
विद्योतते राजमार्गः छायापथ इवाम्बरे ॥

शशाङ्कशतसुन्दरस्फटिकभाजनान्तर्गताः
स्फुरत्तरलतारकाकृतिधरास्समुद्दाङ्किताः ।
अविन्धनसमुज्वलच्छ्वसनवेगसंधुक्षिताः
निशास्वपि दिवाभ्रमं विदधते प्रदीपाङ्कुराः ॥

निशि कासारसलिले प्रतिबिम्बितमूर्तयः ।
शैलाग्रदीपिका भान्ति फुल्लाब्जनिकरा इव ॥

नीलाश्मक्लृप्तप्रासादे स्फुरन्ती दीपवल्लरी ।
सुस्निग्धनिकषान्तस्था हेमरेखेव राजते ॥

स्निग्धेन्द्रनीलसच्छायस्तम्भराजिविराजितैः
बहिर्विहाररुचिरमसृणाङ्गणचत्वरैः ॥

लोचनासेचनाकारैर्भुवनाकल्पमूर्तिभिः ।
भूरिप्रसादनिकरैः पुरमार्गो विराजते ॥

सितारुणश्यामलपीतकाचसमुद्गकोपाधिविशेषभिन्नः ।
आत्मेव मायावशगो विभाति विचित्ररूपाकृतिभिः प्रदीपैः ॥

विराजते किल धरान्तरे समन्ततो नानादिगन्तागतनिरन्तराल-मिलितजनसततिदन्तुरितराजपथ, अतिसान्द्रसंरूढनिम्बजम्बीरसर्जार्जुन-वेणुबाणश्रीतालनारिकेळक्रमुकप्रमुखतरुषण्डहरितायमानदिङ्मण्डल. देव-मातृकनदीमातृकपरिवहज्जलद्रोणीतटोपान्तसञ्जातपुण्ड्रेक्षुसस्यालिकपिश-केदाराभोगविलसदुपशल्यं, अतिविपुलराजवीथीपार्श्वद्वयप्रक्लृप्तैः स्वस्तिका-कारैर्नन्द्यावर्तलक्ष्माभिः वर्धमानगृहैः रुचकप्रभेदैस्सर्वतोभद्रलक्षणैर्विचित्र-सद्मभिरुपशोभित, प्रतिगृहाङ्गणमनलसयोगशून्यैरपि प्रदीपकश्वसनसवेग-संधुक्षितैः लम्बमानस्फटिकघुटिकासरविसरकाचसमुद्गकान्त-प्रस्फुरद्भि-श्शशिकोटिसुन्दरैर्विमलप्रदीपैः प्रकाशितदशदिशाभोग, प्रतिवर्त्मसन्नि-धापितैर्निरन्तरोड्डीयमानसलिलधारासञ्छादितदिवसकरकरनिकरैस्सलिलय-न्त्रनिवहैरुपशोभित, विविधयन्त्रोपकरणभ्रमणरयसमुच्चालिततुरिमतन्तु-

सतानसीवनसमुत्पादितक्रिमिशोकफलोर्णादिनिष्प्रवाणिसकुलवयनसदनं, विविधौषधशस्त्रक्रियानिष्णातभिषगुपक्रममाणचिकित्साविशेषसमुल्लासित - जननिकरश्लाघ्यमानभिषड्मन्दिर, निखिलशास्त्रार्थमार्मिकोपाध्यायविनीतमतिभिः समुपार्जितस्मृतिशक्तिभिरधीतानिखिलशास्त्रैरभ्यस्तकलाविशेषै - रासादितसुशीलैरुपदर्शितपरोपकृतिभिरनुत्सेकिभिः स्वभावधीरै विद्यार्थिभिः परीवृतकलाभ्यासमन्दिर, पण्डिताग्रेसरसशोधितैरतिप्रयत्नसंग्रहीतैर्निगमागमपुराणेतिहासादिशब्दकोशै सुदुर्लभैरन्यत्र पट्टिकानिबद्धैः परिपूर्णप्राच्यकोशागारं, तुरगशतबलाधिक प्रसर्पद्भिस्ताम्रतन्तुसतानमध्यनिष्ठ्यूतस्फुरत्तेजोमण्डलैरावाहिकचालकोद्दीपकादिविचित्रशक्तिसंधु - क्षितैस्सततमपि रोरूयमाणैर्वैद्युतानलचक्रैराकीर्णदीपप्रसारणसदनरुचिर, अर्थप्रयोगकुशलारब्धैः सम्भूयसमुत्थापितैर्दानादानकुसीदग्रहणविनिमय परिवर्तनादि विविधधनवर्धनोपायसमुपचितैरश्रान्तवितीर्यमाणपर्युदञ्चनैर - नेकविधैर्निधिभिरापूरित, कर्परेष्टिकादिनिर्माण—गन्धद्रव्यतैलाकर्षण—तण्डुलावघात —खनिकार्मिक — सलिलानयनादिविविधकर्मण्ययन्त्राधिवासमनोहरं, अविदूरसन्निवेशितै क्रायिकविक्रायिकजनसम्मर्दनिरवकाशप्रचारैराबद्धमुकुरैः सन्नद्धालेख्यपट्टैरुत्कीर्णशङ्खशुक्तिभिः पुञ्जीकृतमणिसरै प्रसारितवसनप्रवेकै. राशीकृतकुङ्कुमवलयावळीदन्तपत्रैरुन्नमितकुसुमसरैः प्रलोभनीयरत्नाभरणै. समवायीकृतपिठरभाण्डकर्करीशतै: उत्करीकृतपृथुकलाजचणकैः राशीकृतशाकशलाटुकन्दमूलैरालम्बितालिकुचनारङ्गमातुलुङ्गरम्भादिविविधफलस्तबकैः उद्धूयमानधूपवर्तिभिः नानादिगन्तागतसंग्रहीतविविधवस्तुपूरितापणैरुपेत, क्वचिदुद्धूयमानगोधूमैरानीयमानतण्डुलैरावर्ज्यमानगोणीशतैराघट्यमानापिटकैराकाल्यमानकुतूमुखैराखण्ड्यमानशाकपटलैरुत्कार्यमाणधान्यकैरुपनयिमानवेशवारैरादीयमान - स्थालीबिलीयसकलसंभारैः द्विगुणत्रिगुणाधिकदानप्रतिश्रवविप्रलब्धगता-

गतखिन्नजनकोलाहलैराटीकमानयामिकप्रतिभयविलीयमानधूर्तनिकरै॰ द्रण्व्यमानकूटतुलामानविदग्धकिराटैरश्रान्तविपणिपथं, क्वचिदिदमस्य तदेतदमुष्य किंचैतदेतस्य परमदस्तस्येति विलिख्य नामाक्षराणि पिटकेष्वापूर्यापूर्यप्रहितप्रत्यग्रसमग्रसामग्रीभरमुग्रासपृष्ठदासेरकविसष्ठुलगातीनिरुद्ध - गमागमसत्रप्राङ्गण निखिलधरणीमण्डलेनेव निरवशेषमुपायनीकृतसकलसभारं, प्रजासुखप्रवणहृदयश्रीकृष्णनृपालचिराध्यवसायसपादितवणिक्पथप्रसाधनशिल्पकलापोषणफलायमाननिखिलवैभव सकलकलाकोविदलोकस्पृहणीयमपरिच्छेद्य वाङ्मनसयोरविषयः कविकुलवचसां निखिलमहानगरविभवसार महीशूरनगर न्यक्कृतामरपुरम् ॥

मदालसमदावळैश्चटुलघोटकाटीकनैः
पदातिपदचङ्क्रमैस्त्वरितगामिभिः स्यन्दनै॰ ।
पदाहतिविदारितक्षितितलोत्थधूळीभरैः
निरन्तरमहापथे कथमपि प्रचेले जनैः ॥

जलानलोल्लाससमुत्थवेगैर्विकीर्णधूळीभरमस्पृशाद्भिः ।
रथैरनुद्धातसुखैस्सरावै॰ निरन्तरालाऽजनि राजवीथी ॥ ३८ ॥

विज्ञानमूलां कृषिकर्मवृद्धिं प्रचीयमाना समवेक्ष्य राजा ।
विज्ञानशास्त्राध्ययनं स्वदेशे मुदा वितस्तार कृषेर्विवृद्धचै ॥

द्वीपान्तरोपचितबीजहलादिकुप्यकर्मण्यवस्तुकृषिकर्मसमृद्धिमिच्छन् ।
सगृह्य कर्षककृते वसुमान् ववर्ष भानुर्यथा सलिलमम्बुधिमध्यगुप्तम्॥

आकिंचिन्यहतैरियं न सुकरेत्यालोच्य संपत्तये
भूरिद्रव्यनिधिं प्रकल्प्य कृषये प्रोत्साहयन् कर्षकान् ।

शास्त्रज्ञैरुपदर्शितेन विधिना संवर्धयन् सर्वत·
तेजस्वी धरणीं दुदोह पृथुवत्सकल्पितार्थान् मुहुः ॥

कृत्रिमसरितो वापिः निर्झरवेशन्तसारिणीकूपान् ।
कृषिकर्मणा समृद्ध्यै व्यतनोत् श्रीकृष्णसागर नाम्ना ॥

यायाः कला कामदुघा धरित्र्यामुच्चावचा सम्प्रति ता विवृद्धाः ।
अतः प्रजाभिर्निखिलार्थसिद्धिरभूतपूर्वा विभराबभूवे ॥

### विज्ञानपरिष्कारः

विद्याविज्ञानविधुरैर्दुस्साधा भूरिसंपदः ।
विनिनीषुरतस्सर्वान् बलाद्विद्यामशिक्षयत् ॥

विद्यार्थिभ्यो वेतनानि वसनान्युपजीविकाः
कल्पयित्वा यथायोगं विद्यया समयूयुजत् ॥

जनुषान्धान् जन्ममूकानागर्भबधिरानपि ।
युक्त्या सक्रमयामास गीतशिल्पादिकाः कलाः ॥

विमर्शः काव्यार्थे विविधविषये ग्रन्थरचना
विनिर्णीतिश्शास्त्रेष्वभिनयकलानाट्यसमितौ ।
उपन्यासप्रौढिः सरसबहुभाषापरिचितिः
कलाशालास्वित्थं विनयनमपूर्वं विजयते ॥

केमे निसर्गमलिना इति नैव कार्या
बुद्धिर्जनेषु विविधाः प्रतिभा विभान्ति ।
दृष्टानि गात्रमलिनेष्वपि कोकिलेषु
पीयूषसारमधुराणि हि कूजितानि ॥

तस्मान्नृपेण सदसत्प्रविचार्य विद्या
भ्यासो यथारुचि जनेषु विवर्धनीयः ।
इत्थं विचिन्त्य कृषिशिल्पविधानचित्र
सङ्गीतनर्तनकलाः समवर्धयत्सः ॥

नैतद्विशिष्य कथनीयमभूत् स्त्रियोऽपि
विद्याकलासु कुशला इति सिद्धमेतत् ।
प्राप्ते वसन्तसमये फलपुष्पगुच्छ
सन्नद्धपल्लवनतास्तरवो लताश्च ॥

पाश्चात्यदेशेषु विवर्धमानविज्ञानशास्त्राध्ययनाय धीरान् ।
प्रोत्साह्य भूरिद्रविणव्ययेन तस्तारे विज्ञानकला स्वराज्ये ॥

श्रोत्रोपज्ञाः केचन नेत्रप्रज्ञाः परे च गात्रज्ञाः ।
शस्त्रचिकित्साभेषजमर्मज्ञा वर्धिता महीन्द्रेण ॥

प्रावर्तयत्संस्कृतपाठशाला पुराणशास्त्रागमबोधनाय ।
यत्र द्विजाग्रयाः प्रमदावनान्तास्तीर्थोदरा विप्रसवाभिरामाः ॥

अयाचितोपस्थितजीवनानां भूतानुकम्पामृदुमानसानाम् ।
शिष्यप्रदेयागमसञ्चयानां वीतस्पृहाणा ततिराविरास्ते ॥

अधीयाना ब्रह्मसूक्तं सेवमाना गुरून् सदा ।
कुर्वाणा नित्यविहितं पठन्ति ब्रह्मचारिणः ॥

वाणी वसति यत्रैव ब्रह्मलोकं विहाय सा ।
नालं किमेतत् शालाया विभूत्यादिनिदर्शने ॥

रत्नकङ्कणपरिष्कृतहस्तैः कण्ठलम्बिपृथुमौक्तिकहारैः ।
हेमचिह्नितविचित्रदुकूलैः पण्डितैः सबिरुदैर्विदिद्युते ॥

शास्त्रज्ञाः कवयः पुराणचतुरा ज्योतिर्विदः शिल्पिनो
नीतिज्ञा भिषजः कलासु कुशला हास्याश्रया वैणिकाः ।
शैलूषाः विविधागमव्यसनिनः पारेपरार्ध जना
राजानुग्रहनिर्वृता ववृधिरे विद्याकलावृद्धये ॥

अर्थकोशव्ययं कृत्वा शास्त्रकोशमपीपलत् ।
अन्तरं स विजानीते शब्दकोशार्थकोशयोः ॥

आसृष्टिप्रथितानि भूरिचरितान्यार्षाणि दिव्यानि च
प्रायस्तानि विशृङ्खलेन कलिना जीर्णानि सवीक्ष्य सः ।
तद्रक्षापरिकर्मशोधनपुनर्लेखप्रकाशादिभिः
निस्सख्यद्रविणव्ययेन पुनरप्येतान्यवीवर्धयत् ॥

सितनीलशिलाविभङ्गमाला न हि भूपालककोशसग्रहाः ।
प्रभवन्ति कवीन्द्रसभृतार्थाः स्मृतिकोशा ह्यविनश्वराः विभूत्यै ॥

मुद्रयित्वा बहून् कोशान् प्राचीनानधुनातनान् ।
विद्वद्भ्यो व्यतरद्रत्नराशीनिव वसूपमः ॥

आश्चर्यपरिष्कारः

कावेरीजलपातेन जनयन् वैद्युतानलम् ।
अदृष्टाश्रुतपूर्वासु क्रियासु समयूयुजत् ॥

निर्यन्निर्झरपातजर्झरजलोच्छ्वासप्रवेगभ्रम
चक्रोद्भ्रान्तकरालशक्तिचटितस्फारस्फुलिङ्गोत्कराः ।

गर्जत्स्फूर्जथुघोरघर्घररवा निर्यान्ति विद्युच्छटाः
घूर्णद्वारिनिधिप्रचण्डपवनोद्धूता इवौर्वानलाः ॥

भृगुपतनविशीर्णा शक्तिमाहृत्य वारा
जनयति निखिलार्थप्रापकं वैद्युताग्निम् ।
तमपि च विनियुङ्क्ते सर्वकार्येषु युक्त्या
फलमिदमनुभूतं ज्ञानविज्ञानवृद्धेः ॥

मूर्तिर्जलमयी शम्भोः शिवा शान्ताऽपि धर्षिता ।
वमत्यबिन्धनं घोरं सङ्घर्षात्को न कुप्यति ॥

खनिजान्यपि हेमलोहधातुप्रमुखानि प्रतिशोध्य कोविदैः ।
विविधैः प्रतियोजिताभ्युपायैरदुहत्काङ्क्षितसंपदः स धीरः ॥

भद्रावतीपरिसरे परिकल्पितेषु यन्त्रेषु लोहघनविद्रुतिसाधनेषु ।
सङ्घर्षशक्तिमुपपाद्य विलाप्य धातून् निर्यासलोहतरुसारमुखान्व्यहार्षीत् ॥

अभ्यर्थिताधिकफलग्राहि वस्तुजातमाविष्कृतं पटुतरैरधिकैरुपायैः ।
संपादितं पुरुषकारबलेन राज्यसौभाग्यमेतदधुना फलितं प्रकामम् ॥

लोहविद्रुतियन्त्रेभ्यः पिशङ्गीकृतदिक्तटाः ।
लोहद्रवा विनिर्यान्ति वज्रनिष्पेषनिष्ठुराः ॥

शास्ता स्थावरजङ्गमस्य जगतो राजेति यच्छ्रूयते
तद्दृष्टं नृपधर्मरक्षणपरे श्रीकृष्णराजेऽधुना ।
यो भूतान्यपि तद्गुणांश्च विहिताद्विज्ञानयुक्तेर्बला
दाकर्षन् प्रयुयोज कर्मसु करान् गृह्णन्नितैषामपि ॥

मनोविनोदाय महीमहेन्द्रो मृगान् मृगेन्द्रान् मृगवैरिणश्च ।
प्लवङ्गसारङ्गपतङ्गसंघानबीभरद्भूरिविचित्ररूपान् ॥

निर्मेघे गगने निरन्नविधुरे लोकेऽवमन्ने जले
धीरो धान्यचयैरपीपलदमून् देशान्तरादाहृतैः ।
उत्कूल प्रवहन्नदीतटगतान् ग्रामान्निमग्नान्पुन'
तद्वाधारहितेष्ववन्धयदसौ धन्यो दयालुर्नृप. ॥

अनावृष्टिबाधा जनाना जिहीर्षु. धनागारमेक सनामा विधाय ।
अनायासलभ्य धनादानसौख्य जनाना व्यतानीत् शुनासीरकल्प ॥

इत्थ समुद्यन्नृपधर्मगोप्ता शक्तित्रयीयोजनलब्धवर्णः ।
प्रकामतृप्तप्रकृतिः स्वराज्ये समश्नुते नीतिफलं समग्रम् ॥

परिपालनपरिष्कार

आहूय प्रतिवत्सर प्रकृतिषु प्रज्ञातलोकस्थितीन्
योगक्षेमविधिं विचार्य जनतासौकर्यसपत्तये ।
सर्वत्रापि च लोहमार्गघटना यन्त्रोच्चलत्स्यन्दनान्
नाळीवक्त्रसमुच्चलज्जलझरान् कुल्यादिकान्व्यातनोत् ॥

विहिताध्ययनान् विनेयवर्गान् कृतविद्यैस्सुपरीक्षितान् सुशीलान् ।
धृतिशान्तिमतो निवृत्ततर्षान् पुरकार्येषु नियोजयन् बभार ॥

बहुप्रजाबहुमतै. बुद्धिमद्भिर्बुधोत्तमै ।
विचार्य बहुधा राज्यशासनानि व्यवीवृतत् ॥

प्रजाप्रतिनिधीनसौ विहितपौरकार्यक्षणान्
स्वराज्यभरणक्षमान् समधिकं विधित्सुः स्वयम् ।

पितेव सुगुणोत्तरान् स्वतनयान् प्रजावत्सल
प्रबोध्य समशिक्षयत् नृपनयज्ञचूडामणिः ॥

एव प्रतिदिनमेधमानानिखिलजनजेगीयमाननिजापदान विनयनफलायमाननिजसाम्राज्यलक्ष्मीसमुल्लभितराजराजाभिधानमहाविभव परमवत्सल प्रजासु श्रीकृष्णराजेन्द्र कदाचित् विचित्रमणिविसरतरळरुचिनिचयशबलितकनत्कनकघृणिमसृणितपरिकरनिकरगरीयस्तरमणिझल्लरीपरीरब्धनिवरीसशातकुम्भस्तम्भाग्रदरीदृश्यमानहीरमणीवितानबधुरीभवत्कान्तिलहरीकवचिते समुच्चलद्रश्मिमालाकलापदीपकलिकास्फुरन्मण्डले, द्वारोपान्तसवर्धितकुन्दारविन्दमन्दारबृन्दनिष्यन्दमानमकरन्दबिन्दुसन्दोहसासिक्तभवनाङ्गणे अन्तरान्तरुपान्तराजतोरुस्तम्भाग्रसंकीलिततुलापीठसघाटितमूर्तिभि कराग्रकलिताच्छस्फाटिकापिटकाविवरान्तरुत्कीर्णकुसुमविसराभि हारकेयूरकोटीरवलयादिभूषाविशेषदृश्याभिः कृत्रिममणिपुत्रिकाभिरलङ्कृते कालायसघनशलाकाकीलितैरतिव्यायताभोगैर्निबद्धासितहरिततिरस्कारिणीपटलै वातायनै प्रेमविस्फारितैरिव लोचनैः परिगते समुत्कीर्णदान्तराजतविचित्रवल्लरीपरिष्कृतहेमरेखासवलितकपाटपुटे उपर्युपरिवलमानसितकुसुमसरवैजयन्तीभिरुदग्रस्वर्णशिखरै. प्रदीपमालामरीचिकर्बुरितै. सजवनसौधे विवशीकृतनिखिल लोककलोचनमानसे महेन्द्रस्थानमिव सान्द्रसुमनोबृन्दसेविते शकराङ्गमिव सर्वमङ्गळास्पदे महति महाराजप्रासादान्तराळवर्तिनि सभाश्रीमण्डपे रत्नसिंहासनासीन सेवावसरसमागतनिखिलप्रजाग्रणिनिधिमहाजनान् संभाव्य प्रसादमधुरया दृशा विकस्वरकनकारविन्ददळगौरेण धवळरुचिकौशेयकलितोत्तरीयेण वपुषा जगन्मङ्गळलक्ष्मीभवन पक्षद्वारेणेव विपुलेन वक्षसा हीरमणिहारभूषितेन सुश्लिष्टसधिबन्धेन कण्ठपीठेन जगत्संवननयन्त्रानुकारिणा सुस्मेरवदनेन च प्रमोदित निखिल-

जनमानसो देशकालानुरोधिनीमुपपत्तिमती प्रियहिता प्रसन्नगम्भीरार्था- मिमां वाचमाददे ॥

विनेयाः महाजना. तदेतच्चिराय फलितमस्मन्मनोरथेन, यच्चक्षुषा निरीक्षामहे कृतविद्यान् विनयवतो विवेकिनो राजभक्तिनिरतान् राज्यतन्त्रनिष्णातमतीन् निखिलप्रजाप्रतिनिधीन् भवत । एतदर्थमेव प्रयतितमस्माभिरासिंहासनारोहणमद्यावधि सपदभिवृद्धियोगक्षेमायैव धृतव्रतै । प्रायेणैतद्विदितमेव सर्वेषा, प्रजाना अभ्युदय एव राज्य धर्म एव सर्वश्रेयोनिदानमिति च । तदेतदुभयमपि सुसहित यथा महते फलाय कल्पेत तथा अप्रमत्त प्रयतितव्यम् । यत्र च प्रजावृद्धेरभ्यधिकार्थोपपत्तिर्न संभवेत्तत्र च अपरिहार्य दारिद्र्यमुज्जृम्भेत । तेन च निर्विद्यन्ते प्रजाः । निर्विण्णानां शक्तिरपक्षीयते । अशक्ता निरुत्साहा भवन्ति । अनुत्साहेन योगक्षेमविधिरपि दुस्साधो भवति । अत प्रथम देशसंपदभिवृद्धये प्रयतितव्य महापुरुषैः । सा च सपत्स्यते विद्या कृषिकार्मिक्याधिकारिकविनयनादिभिर्विविधैरुपायोपकरणै समासादितैः । निगूढान्यर्थतन्त्राणि नैव परिच्छेद्यानि मार्मिकैरपि । तेषु चार्थतन्त्रेषु अदुष्ट प्रतिग्रह· कुलानुगत· निध्यादिलाभ क्रयविक्रयोपार्जितः विजयलब्ध· कुसीदासादित कृषिकार्मिक्यवृद्धश्चेत्यर्थाधिगमास्सप्तविधाः, क्षयव्ययपरिवर्तनप्रतिबन्धापहारोपभोगरूपा धनापचयहेतवश्च कौटिल्यकामन्दकादिभि प्रपञ्चिताः । इदानी देशत कालतश्च प्रतिदिन प्रचीयमानान्यर्थतन्त्रमर्माणि दुरूहाणि दुस्साधानि च । एवमर्थतन्त्रेष्वधीतार्थशास्त्ररहस्यैरपि मोमुह्यते । किं पुनरनधीतशास्त्रै· । अत पुरुषेणाधीतपरिशीलितशास्त्रेण नित्यमुत्थानवता च भाव्यम् । यदेतदनुत्थान नाम पुरुषाणा तदतीव परिभवस्थानम् । नह्यन्यदेवंविधमस्ति लघिम्नः कारणम् । अनुत्थानाद्वृत्तिकर्शितस्य सीदत्कुटुम्बस्य नैव भोगो नाप-

वर्गश्च । तस्मादभिजात पुमानात्मोद्धाराय प्रयतेत । उत्थानवतामपि शास्त्रविज्ञान सहज प्रबोध क्रियासु दाक्ष्य देशकालानुरोध स्थिर सकल्प सूनृता वाणी देशवात्सल्य परोपकृति स्वधर्माभिरुचिरित्यादयो महापौरुषिका गुणा. काममापूरयन्ति । अस्माभिरप्यमुमेवार्थं मनसि निधाय प्रजाना गुणसपदभिवृद्धये प्रयतितम् । प्रयतिष्यते च देशकालानुरूपम् ॥

इदमत्रावधार्यता— प्रथम प्रजावत्सलो राजा प्रवर्तयत्यर्थाधिगम-साधनम् । तदनु प्रचार्यते कुशलैर्महाजनैर्विधृत. । तत प्रजाभि-रविशेषमनुभूयन्ते तत्फलानि । स एष धर्मः समृद्धिमति राज्ये चिरादनुवर्तते । तस्मादस्मदुपक्रान्तेषु जनहितेषु साधनेषु यथायोग प्रयतमाना फलमास्वदध्वे । चिराध्यवसायेन सपन्नाश्चास्मन्मनोरथाः । दुरूहे पुनर्दुस्साधे गुरुणि राज्यतन्त्रे सुपरीक्षितानपि विश्वसनीयानपि नियोक्तुमेकदैव सदिहानैरस्माभि सम्यग्विमृश्य पौरसामाजिककार्येषु प्रथमं नियुक्ता । तत्रोपदर्शितशक्तिभिर्निर्व्यूढप्रजाहितकर्मभिः प्रमु-दिता वयमिदानीन्तनेषु राज्यशासननियमराज्यादायपरिशीलनादिकार्ये-ष्वभ्यन्तरीकरिष्याम । अस्मत्सहोत्थायिनो महाजना. चिराय विचार्य प्रदत्तेष्वधिकारेष्वप्रमत्तै. भाव्यं भवद्भिरपि, प्रजाभिराहितभरा. खलुभवन्तः। अस्मन्नियोगिभि क्रियमाणेषु प्रजाहितकरशासनविधिषु राजकार्येषु च सहयोगिन जनहितान्यस्मासु निवेदयन्त. संसाधयत प्रजाहितानि । तदेतच्चिरादभीप्सितमस्माकम् । यत्प्रजा एव स्वस्वकार्यनिर्वहणक्षमा देशसपदभिवृद्धिषु प्रवर्तन्ते । यथा च न लुम्पेयुस्तस्करा न प्रतारये-युर्धूर्ताः नाभ्यवस्कन्देयुर्बलिनो दुर्बलान् नात्याचरेयुरनुशासनानि, तथा सर्वाङ्गीणविलोचना. प्रयतध्वम् । सर्वेष्वपि च कार्यारम्भेषु प्रयतमाना-नामात्मसंयम एव निखिलसिद्धिहेतुः । दिङ्मण्डलजयिनो महावीरा

तपस्विनो महर्षयः सर्वस्वदातारः सत्पुरुषाः सदसस्पतयोपि मनीषिणः आत्मसंयमसंपदमनुपलभ्य विफलमनोरथास्संवृत्ताः पुरा। संयतात्मा शुभलक्षणः पुमान् मङ्गळमायतनं लक्ष्म्याः। सर्वथाऽस्मत्प्रयत्नः कल्याणोदर्को भूयादिति च समनुध्यायन्तो निरीक्षामहे तत्र भवतामुपक्रमम्॥

इत्थं नरेन्द्रवदनाम्बुजरङ्गनृत्य
द्वागीश्वरीचरणनूपुररावरम्याम्।
वाचं निशम्य विहिताञ्जलयः प्रहृष्टाः
विज्ञापनां विदधिरे सदसि प्रणम्राः॥

विज्ञापनावसरमेत्य महीशलोक-
क्षेमाय कल्पितवति त्वयि सर्वसौख्यम्।
याचामहे किमिव हि स्वमनीषितानि
भूमन् समीहितमितोप्यधिकं किमस्ति॥

विद्याकलासु कुशलान् विदधासि लोकान्
वृत्तिं प्रकल्पयसि पालनमादधासि।
निर्व्याजबन्धुरसि सर्वजनस्य यस्मा
दायोजिताखिलभराः त्वयि निर्वृताः स्मः॥

सद्रक्षणाय नृप दण्डधरे त्वयीत्थं
न्याय्यात्पथः स्खलति कः खलु ते प्रजासु।
निर्व्यूढसौहृदमयं गुणरत्नकोश-
मासाद्य पूर्वसुकृतैः फलितं चिरान्नः॥

त्वत्तेजसा नियमितेव वसुंधरापि
सूते सुवर्णमणिलोहमुखान् खनिभ्यः।

उत्सेकिनो द्विरदनान् विपिनानि तुभ्य
रक्षानुरूपकरवत्प्रदिशन्ति राजन् ॥

राजन् त्वयैव गुरुणा करुणार्णवेन
सक्रामितात्मपुरुशक्तिलवा वय हि ।
सशोषितेषु तरुषु प्रविसार्य शक्ति
तानेव पल्लयति पुष्पयत वसन्तः ॥

राजेन्द्र यूथपतिनिर्वहणीयकार्ये
सयोजिता' कलभका इव शिक्षणीया
मान्य त्वदीयमनुशासनमादरेण
मूर्ध्ना विधृत्य करवाम नियुक्तमर्थम् ॥

इति विविधविधानै राज्यवृद्धि विधित्सो.
नृपनयगुणयोगैर्वर्धितप्राभवस्य ।
समभवदधिका श्रीर्धर्ममूलस्य राज्ञः
किमिव बहुभिरुक्तैः सर्वतो वृद्धिरासीत् ॥

अहरहरुपचितविभवप्रमुदितजनविततिसततनुतकीर्तिः ,
तनुते धरणीभरण तनुमानिव जगति नृपधर्मः ॥

अनुवनमधिकं सुपुष्पिताग्रा द्रुमविततिर्वसुधा समृद्धसस्या ।
अधिगतपरमार्थलाभतुष्टा जननिवहा विलसन्ति धर्मनिष्ठाः ॥

अर्थोपगा शास्त्रवृद्धिः कृषिवृद्धिः फलोपगा ।
आसीद्दण्डधरे राज्ञि नयवृद्धिः सुखोपगा ॥

मयूरचित्रीकरणं हिमांशो' कान्तिक्रिया पाटलिगन्धबन्धः ।
विलासशिक्षा नवयौवनस्य गुणानुवादो नृपपुङ्गवस्य ॥

दूराधिरोहीणि हि चापलानि गुणानुरागो न हि दोषदर्शी ।
इत्थं विमृश्यैव कृतिर्निबद्धा स्वच्छन्दवृत्ता मनसः प्रवृत्तिः ॥

निर्मत्सरा यदि बुधाः गुणज्ञा यदि लौकिकाः ।
वर्धते काव्यसाम्राज्यं रसार्द्रवचसः कवेः ॥

प्रफुल्लन्मंदारस्तबकविलसत्कुन्तळभरा
दळन्नीलाम्भोजप्रकरसुषुमोदारनयना ।
नटन्नासामुक्तामणितरळदन्तच्छदरुचि
दरस्मेरा माता हृदयमणिपीठीं भजतु मे ॥

अधीतिः साहिती यस्य विनेता श्रीजगद्गुरुः ।
सुब्रह्मण्यस्य कृतिषु जीयात्कृष्णनृपोदयः ॥

कुक्के-सुब्रह्मण्यशास्त्री.

## वेद समयविमर्श.

इह खलु प्रमेयसिद्धि' प्रमाणमन्तरेण न सभवतीति सर्वविदितोऽयमर्थः । प्रमाणानि च प्रत्यक्षानुमानोपमानशब्दादीनि । प्रत्यक्षेण च ग्रहीतुमशक्योऽर्थः अनुमानेन गृह्यते । अनुमानेन चाप्रतिपन्नोऽर्थ' शब्दादेव प्रमितो भवति ' यथा कश्चित्सेवक स्वामिन प्रतिदिनं द्रष्टु गत स्वामिसबन्धिना वैणवदण्डपादुकोष्णीषादीनां दर्शनेन स्वामी गृहान्तरास्ते इत्यनुमिनोति । तत ·प्रतीक्षमाणश्च स बहिरागतं स्वामिनं दृष्ट्वा स्वकार्य विज्ञाप्य गच्छति स्म । कदाचित्कार्यान्तरवशाद्वैणवदण्डादिक परित्यज्य बहिर्गत स्वामिनं अन्तस्थितं सन्तमनुमिन्वन् प्रतीक्षमाणस्सः गृहपरिजनै नास्त्यत्र स्वामी बहिरगच्छदिति प्रभोध्यमानो निवर्तते । एवमादिव्यवहारे प्रत्यक्षानुमानाभ्यामनिर्णीते च विषये आप्तोच्चरित शब्द प्रमाण स्यात् ॥

किंबहुना—आप्तवाक्यमेव सर्वत्र परिगृह्यते । आप्तवाक्येनैव कोविदाः सकल व्यवहरन्ति। यद्याप्तवाक्यं प्रमाणं नाभविष्यत् नैव कथमप्यभविष्यदैहिकपारलौकिकव्यवहाराणा विज्ञानम् । आप्तलक्षण च व्याख्यात भगवता आत्रेयेन महर्षिणा—

रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये ।
येषां त्रैकालममलं ज्ञानमव्याहतं सदा ॥
आप्ताश्शिष्टा विबुद्धास्ते तेषा वाक्यमसंशयम् ।
सत्य वक्ष्यन्ति ते । इत्यादिना ॥

न्यायशास्त्रेऽप्येवमेव प्रतिपादित—आप्त' खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा । साक्षात्करणमर्थ-स्याप्तिः तया प्रवर्तत इत्याप्त । आप्तत्व च प्रयोगहेतुभूतयथार्थ-ज्ञानवत्त्वम् । प्रकृतवाक्यार्थगोचरयथार्थज्ञानजन्यवाक्यत्व प्रमाणभूतश-ब्दस्य लक्षण सपन्नम् ॥

प्रत्यक्षानुमानाभ्या ग्रहीतुमशक्यमलौकिकमुपाय, अतीन्द्रिय धर्माधर्मेश्वरादिक च येन प्रमाणेन जानीम. स वेद इत्युच्यते। यदाहु —

प्रत्यक्षेणानुमानेन यस्तूपायो न बुध्यते ।
एन विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ इति ॥

तथा च धर्मब्रह्मप्रतिपादक अपौरुषेयं प्रमाणवाक्य वेद इति फलितम् । विदन्त्यनेन धर्मादिकमिति वेदशब्दनिर्वचनं दर्शयन्ति । आदादिकाद्विदधातो' ज्ञानार्थकात् 'हलश्च' इतिसूत्रेण घञि सति वेद-शब्द निष्पद्यते । सनत्सुजातीयभाष्ये श्रीशकराचार्यचरणास्तु "ऋगा दयो वेदाः ब्रह्मप्रतिपत्त्यर्थ विचारं कुर्वन्तीति वेदाख्यानमवापु., अथवा सद्भावं साधयन्तीति वेदा., विदन्ति वेदनसाधनभूता इति वा, ब्रह्मा-धीनमात्मान लभन्त इति वा वेदाः इति "विद विचारणे, विद सत्तायां, विदज्ञाने, विदॢ लाभे" इत्येभ्यो धातुभ्य. वेदशब्दनिर्वचन प्रादर्शयत् । श्रूयते धर्मादिकमनयेति श्रुतिरित्यपि वेदस्यैव नामान्तरम् । आम्नायते अभ्यस्यते गुरुपरंपरयेत्याम्नाय इति वेदमात्रबोधक. शब्दः । एते त्रयोऽपि शब्दाः वेद एव रूढाः नान्यत्र । वेदः न कर्तृजन्य', किंतु गुरुपरंपरया प्राप्त इत्यंशे मीमांसका. प्राहु' "न हि वेदः पुरुषनिर्मितः—

वेदस्याध्ययन सर्व गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाऽध्ययन यथा ॥

इत्यादिना वेदापौरुषेयत्वस्य साधितत्वात् य कल्पः स कल्प-पूर्व इति न्यायेन ससारस्यानादित्वात् ईश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीय वेदमस्मिन् कल्पे स्मृत्वा उपदिशतीत्येतावतैव उपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्तेश्च" इत्यादिना ॥

ईदृशो वेद आस्तिकानामार्याणा सकलपुमर्थवितरणधुरीणः प्रत्यक्षकामगवीरूप इति सदुन्दुभिताडनमुद्घोष्यते । एतादृशमहामहिम-वेदराशिस्वरूपं ब्राह्मणादयो वर्णा द्वैतीर्यिकमुपनयनसंस्काराख्य जन्म-प्रतिपद्य ब्रह्मचर्यदशायां आचार्यानुग्रहात् नियमन· उपाकरणादिपूर्वक गृह्णीयुः । एव गुर्वनुग्रहाल्लब्धो वेद यथोक्तफलप्रदाता भवतीति मन्वा-दिसम्मतो राद्धान्त । यदाहुः—

चातुर्वर्ण्य त्रयो लोका चत्वारश्चाश्रमा पृथक् ।
भूतं भव्य भविष्यच्च सर्व वेदात्प्रसिध्यति ॥
वेदमेव सदाऽभ्यस्येत्तप तप्स्यन् द्विजोत्तम. ।
वेदाभ्यासो हि विप्रस्य तप· परमिहोच्यते ॥
आहैव स नखाग्रेभ्य· परमं तप्यते तप. ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्याय शक्तितोऽन्वहम् ॥

याज्ञवल्क्य·—

यज्ञाना तपसां चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां नि·श्रेयसकर पर ॥

व्यासोपि—

नान्यतो ज्ञायते धर्म. वेदादेव विनिर्बभौ ।
तस्मात्सर्वप्रयत्नेन धर्मार्थी वेदमभ्यसेत् ॥

इति ॥ स च वेद मन्त्रब्राह्मणात्मकः । तत्र मन्त्राः अनुष्ठेयार्थप्रकाशका ऋग्यजुस्सामभेदात्त्रिविधास्सपद्यन्ते । तत्र पादबद्धगायत्र्यादिछन्दोयुता. ऋचः अग्निमीळे'' इत्याद्या । ता एव गीतिविशिष्टा. सामानि । उभयविलक्षणानि 'इषेत्वा' इत्येतानि यजूंषि । ब्राह्मणमपि विधिरूप. अर्थवादरूप उभयविलक्षण चेति त्रिविधम् । विध्यर्थवादोभयविलक्षणं तु वेदान्तवाक्यम् । तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते । विधिपदरहितमपि प्रमाणवाक्यत्वेन क्वचिद्भूतार्थवाद इति व्यवह्रियते । तदेव कर्मकाण्डब्रह्मकाण्डात्मक. वेद मन्वादिप्रतिपादितरीत्या धर्मार्थकाममोक्षहेतुरिति सर्वसप्रतिपन्नोऽयमर्थः ॥

एतादृशो वेदसमुदाय कदा प्रादुर्बभूवेति जिज्ञासाया सत्या केचनार्वाचीना पाश्चात्यप्रवराः प्राहु — बुद्धमुनिना उपदिष्टेषु सूत्रेषु वेदब्राह्मणकल्पसूत्रादिशब्दानां प्रयोगदर्शनात् क्रिस्तशकात्पूर्वं वर्षाणां षष्ठे शतके वेदब्राह्मणकल्पसूत्रादयो ग्रन्था रचिता आसन् । भाषाशैल्यापि वेदेभ्य ब्राह्मणान्युत्तरकालिकानि । ब्राह्मणेभ्यश्च सूत्राण्युत्तरकालिकानि चेति ज्ञायन्ते । ब्राह्मणसूत्रग्रन्थयो भाषाया यो भेदः सदृश्यते स वत्सरशतद्वयं विना न जायत इति बौद्धकालाद्वत्सराणां शतद्वयात्प्रागेव सूत्राणि रचितानि । सूत्रेभ्य. प्राक् वत्सराणा शतकद्वये ब्राह्मणान्यासन् । तेभ्यश्च वत्सराणां शतद्वयात्प्राक् वेदास्समभूवन् इति म्याक्समूलर्प्रभृतयः ॥

ब्लूफील्ड्महाशयस्तु आर्याणामुत्पत्तिकाल वेदा असन्तोऽपि आर्याणां संस्कृतभाषामहिम्ना नागरकतामहिम्ना च वेदा क्रिस्तशकात्पूर्वं पञ्चशताधिकचतुस्सहस्रवत्सरेभ्यः पूर्वमासन् इति ॥

जाकोब्डिस्किट्प्रभृतयः यजुर्वेदब्राह्मणप्रतिपादितादिशा कृत्तिका

नक्षत्रादित मेषराशिगणने क्रिस्तशकात्पूर्वं पञ्चशतोत्तरद्विसहस्रवत्सरेभ्य पूर्वं वेदास्सबभूवुरिति ॥

केटकारमहाशयास्तु तिष्यनक्षत्रस्थबृहस्पतिग्रहाधारत. गणन कृत्वा षट्शतोत्तरचतुस्सहस्रेभ्य प्राक वेदा अवर्तिषतेत्यूचु. ॥

बालगंगाधरतिलकमहाशयस्तु–पाश्चात्यप्रदर्शितपथेन सम्यग्विचार्य क्रिस्तशकात्पूर्वं दशसहस्रवत्सरेभ्य पूर्वं यदा आर्याणा उत्तरध्रुवसमीपे वासोऽभूत् तदा तै प्रार्थनारूपा वेदा व्यरच्यन्त। तदानी पुनर्वसु-नक्षत्रादित. मेषविषुवगणना समजायत। तदात्व एव सूर्य समीपे साक्षात्कृत्य तदीयभ्रमणादिक सूर्यबिम्बस्थवर्णविशेषान् तदीयज्वाला-भागाश्च स्वावासे उत्तरध्रुवे षण्मासान्यह षण्मासानि रात्रिः इत्यादीन् विषयान् विज्ञातुमुपचक्रमिरे। एतादृशसिद्धान्तप्रकाशिका ऋचस्तु—

शुक्र ते अन्यद्यजत ते अन्यद्विषुरुपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥

इत्याद्याः। पुरातना आर्या इरान् देशाद्वा एष्याखण्डस्योत्तर-भागाद्वा आर्यावर्तं न प्राविक्षन्। किंतु तेषामावासस्थानं उत्तर-ध्रुवस्य पार्यन्तिकः प्रदेश.। स च यदा हिमान्या समावृत. तदा स्वावासमन्वेष्टु तत्रतत्राटन्तः एष्याखण्डीयोत्तरभागेष्ववातरन्। तदानी-मेव ऐतरेयब्राह्मणस्य सप्तमपञ्चिकास्थे—

कलिः शयानो भवति संजिहानस्तु द्वापर ।
उत्तिष्ठस्त्रेता भवति कृत संपद्यते चरन् ॥
चरैवेति चरैवेति ॥ इति वेदभागमुच्चारयामासु. ।

तदात्वं एव मृगशीर्षनक्षत्रादितः मेषविषुवगणना प्रसक्ता। अटनानन्तरमेकत्र यदा वासं स्थिरमकल्पयकार्षुः तदा स्वोत्तरेभ्यः स्वासि-

द्धान्त प्रकाशयितु स्वरवर्णमात्रालोपादिदोषरहिता प्रार्थनारूपा ऋच· प्रकाशयामासु । न तु नूतनतया मतसिद्धान्त प्राकल्पयन् । अत एव चतुस्सहस्रेभ्य प्रभृति अद्यपर्यन्त वेदेषु स्वरवर्णमात्रादीना लोपाभावादेव आधुनिका वेदा अनादय इत्युद्घोषयन्ति । एतादृशकाल एव यजुर्वेदब्राह्मणप्रोक्तकृत्तिकानक्षत्रादित मेषराशिगणना प्रवृत्ता इत्याह ॥

एव महाकल्पप्वनश्वराणामीश्वरस्मृत्यारूढाना जगत्सर्जनहेतूना वेदानामनादित्व मुषित्वा सादित्व प्रमाणाभासेन प्रकल्पयन्त एते किमर्थं क्लिश्यन्तीति तत्त्वतो न विद्म. । द्वापरान्ते विष्णुपुराणोक्तरीत्या अखण्डान् वेदान् वेदव्यास यदा व्यास्थत् तदैव वेदोत्पत्तिकालः प्रायेण स्यादित्यभिप्रयन्ति नूनम् ॥

चरित्रचिन्तका अपि वेदोत्पत्तिकाल क्रिस्तशकस्य नातिसान्निहितं प्रदर्शयन्ति । तथाहि—कलिवर्षस्यारंभ क्रिस्तजन्मन प्राचीनेभ्यः (३१०२) वत्सरेभ्यः प्रागण्यते । (११०१)—(१७०१) कलिवर्षजात वेदकालः । ततः (१७०१)—(२१०१) ब्राह्मणकालः । (२१०१)—(२८५९) तत्त्वदर्शनकाल. । (२८५९)—(३६०१) बुद्धमतकालः । (३६०१)—(४०५९) पुराणकाल इति व्यवस्थां स्वप्रातिभयोत्प्रेक्षन्ते । नूनं जगतीस्थैः समस्तैर्वस्तुभि क्रिस्तजन्मसंनिहितकालीनैरेव भावितव्यमिति भूयसी लिप्सा स्यात् । एते पाश्चात्यविपश्चित. प्रतिपिपादयिषितं वेदोत्पत्त्यादिसिद्धान्तं परस्परविरुद्धमेवोररीकुर्वन्ति ॥

वस्तुतस्तु—वेदाः, तदर्थनिर्णायकानि शास्त्राणि, तदङ्गानि व्याकरणज्योतिषनिरुक्तानि पुरातनान्येवेति निश्चिनुम ॥

तथाहि—जगति प्राणिनामनुभूयमान सुखदुःखादिवैचित्र्यं प्रति तत्तज्जीवात्मसमवेतधर्माधर्मादिवैचित्र्यमेव निमित्त संपद्यत इत्यकामेनाप्यभ्युपगन्तव्यम् । अन्यथा अनुभूयमानस्य वैचित्र्यस्य आकस्मिकत्वापत्तेः । सृष्ट्यादावीश्वरेण सृज्यमानेषु प्राणिषु तात्कालिकसुखदुःखादिवैचित्र्य प्रति तत्पूर्वकल्पीयजीवसमवेतादृष्टादिकं निमित्तमित्यगत्याऽऽश्रयणीयमेव । यथा प्रथममङ्कुराद्बीजमभवत् । अङ्कुराद्वा बीजजातमिति न कोपि सूरिनल्लज्ञो निश्चेतुमर्हति. तथा प्राणिगतसुखदुःखवैचित्र्यतन्निमित्तभूतादृष्टयोश्च पौर्वापर्य निर्णेतुमद्यावधि प्राज्ञप्रवरोऽपि नेष्टे । एव च समारभ्य जीवाना जीवीयपुण्यापुण्यकर्मणा ईश्वरस्य चानादित्वं सर्वै प्रामाणिकै प्रतिश्रोतव्यम् । यदा जगदीश्वरेण उच्चावचयोनिस्था असख्याता प्राणिनः स्रष्टव्या आसन्, तदा तज्जीवनहेतवः सूर्यचन्द्रगुरुशुक्रवाय्वादयो ध्रुवं स्रष्टव्या एव । निर्मितेष्वेतेषु सूर्यः बहुकोटिवत्सरेभ्यः प्रागेवोदपद्यत । चन्द्रस्तावत् पञ्चकोटि वत्सरेभ्य प्राक्समजनि । भूगर्भशास्त्ररीत्या भूमिः द्विकोटिवत्सरेभ्य पूर्वं वासार्हा नाभवदिति पाश्चात्या एव ब्रुवन्ति । बहुदूरवर्तीनि ध्रुवादिनक्षत्राणि कदा जातानि ईश्वरश्च कदा जात इति निर्णेतुमद्यावधि न प्रयतन्ते । प्रयतमाना अपि वा सम्यक्परिच्छेत्तुं न पारयन्ति । यत बीजाङ्कुरवदेतेषां मूलमवगन्तुं शतकोटिवर्षपर्यन्त स्थैर्येणोत्प्रेक्षितु न कोपि शक्नुयादित्यास्तिकाः श्रद्दधीरन् । तथा सृष्टिकाल एव स भगवान् सर्वज्ञ सर्वशक्त सर्वेश्वर प्रवृत्तिनिवृत्तिरूपं वैदिक सनातन धर्मं मरीचिप्रभृतिभ्यः सनकादिभ्यश्च ब्रह्ममानसपुत्रेभ्य उपदिदेशेति गीताभाष्यादौ शंकरभगवत्पादाः प्राहुः । यथा—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।<br>
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥

एव परपराप्राप्तमिम राजर्षयो विदुः ।
स कालेनेह महता योगो नष्ट परतप ॥
स एवाय मया तेद्य योगः प्रोक्त. पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्य ह्येतदुत्तमम् ॥

इत्यादि ॥ अत्र पूर्वाध्यायाभ्या प्रतिपादितस्य कर्मयोगफलीभूतस्य ज्ञानयोगस्य पुरातनत्व, अव्ययवेदमूलकत्वादव्ययत्व, प्रतिमन्वन्तरमुपदेशसभवेऽपि वैवस्वतमन्वन्तरे आदित प्रभृति गुरुपरम्परायाः प्रवृत्त्व, मध्ये विच्छेदसभवदशाया स्वेनैव प्रकाशितत्व चेत्यादिविषयपरिशीलने न वेदविहितधर्माणा वर्णिभिराश्रमिभिरनुष्ठेयाना लौकिकवैदिकव्यवहारोपयोगिनां सृष्टिकालमारभ्य अद्ययावत्सत्त्वस्य सुज्ञेयत्वाद्वेदादन्यत्र तेषा धर्माणामवगतेः गगनारविन्दायमानत्वात्सिद्धमेव वेदानामनादित्वम् ॥

किंच—

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।

इति श्वेताश्वतरश्रुतिपर्यालोचनया स सर्वेश्वरः स्वमायया महान्ति भूतानि सृष्ट्वा हिरण्यगर्भं निर्माय तस्मै पूर्वकल्पस्थान् स्वबुद्ध्यारूढान् पूर्वकल्पस्थवेदसमानानुपूर्वीकान् वेदानुपदिदेशेति वेदानामनादित्व सुस्थमेव । अत्र श्रुतौ प्रहिणोति न त्वपूर्वं निर्मातीति प्रहिणोतिपदस्वारस्याद्विद्यमानानेव वेदान् ब्रह्माणं ग्राहयामासेत्यवगम्यते । स च हिरण्यगर्भाख्यो ब्रह्मा वेदशब्दमुच्चार्योच्चार्यैव भूरादिलोकान् सूर्यादिग्राहान् इन्द्राग्निवाय्वादिदेवता पितृमनुष्यांश्च निर्मम इति श्रुतयो वदान्ति । तथा च बह्वृचानां श्रुतिः--

एते असृग्रमिन्दवः तिरःपवित्रमाशवः ।
विश्वान्यभिसौभगा ॥

इत्यादिः अत्र मन्त्रस्थैः पदैः देवादीन् स्मृत्वा विश्वं ससर्जेति ब्राह्मणं

ऋगर्थं ब्रूते। यथा—"एत इति वै प्रजापतिर्देवानसृजत। असृग्रमिति मनुष्यान्। इन्दव इति पितॄन्। तिरःपवित्रमिति ग्रहान्। आशव इति स्तोत्रम्। विश्वानीति शस्त्रम्। अभिसौभगेत्यन्या प्रजाः" इति॥ तथा—

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवं च पृथिवीं चान्तरिक्षमथो स्वः॥

तथा—"स भूरिति व्याहरत् स भूमिमसृजत। स भुव इति व्याहरत्। सोऽन्तरिक्षमसृजत" इति तैत्तरीयब्राह्मणे च। जगतः शब्दप्रभवत्वं दर्शयन्ति स्मृतयोऽपि। तत्र मनुः—

नाम रूपं च भूतानां कर्मणां च प्रवर्तनम्।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः॥
सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे॥

स्मृत्यन्तरमपि—

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥

इति। निरूपितैरेतैः प्रमाणैः सृष्टेः पूर्वं वेदानां सत्त्वमवश्यमभ्युपेयम्।

एतेन वेदा ऋषिभिः प्रणीताः, "नमऋषिभ्यो मन्त्रकृद्भ्यः" इत्यादिप्रमाणवशादिति वेदानामनादिभूतानां सादित्वमर्वाचीनविपश्चित्कल्पितं दूरतोऽपास्तं वेदितव्यम्। ऋषिभिश्च तपसा वेदानां प्रकाशनात्। अस्मिन्नर्थे श्रुतिस्मृतयः प्रमाणम्। तथा च बह्वृचानां श्रुतिः—

यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टाम्। इति॥
अस्यार्थस्तु—यज्ञेन पूर्वसुकृतेन वाचः वेदस्य लाभयोग्यतां प्राप्ता-

मसन्तो याज्ञिकाः ता ऋषिषु स्थिता लब्धवन्त इति । वेदव्यासा-द्याश्चैवमेव स्मरन्ति—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥

इति । सेतिहासवेदानां युगान्तान्तर्हितत्वोक्त्या नित्यत्वावगमात् मन्त्र-कृद्भ्य इत्यस्य मन्त्रप्रवचनकर्तृभ्य इत्यर्थकरणान्न दोषः ॥

किंच वेदद्रष्टृत्वमेव ऋषीणां न कर्तृत्वं एकस्य मन्त्रस्य द्वित्रिबहुऋषिदेवतात्मकत्वावगमात् अन्यऋषिकल्पितरचनात्मकाक्षर-सद्यपेक्षया इतररचितरचनायां वैलक्षण्यस्य सर्वजनानुभवसिद्धत्वात् । तथाच पाणिनिमुनिनापि 'तेनप्रोक्तम्' इति सूत्रितम् । अस्य लक्ष्यं तु तित्तिरिणा प्रोक्तमधीयते तैत्तिरीया इति । भगवान् पतञ्जलिश्च "नित्या शब्दा. नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमन-पायिजननविकारिभिः" इत्यादिना लौकिकानामपि शब्दानां नित्यत्व मुररीचकार। किमुत वैदिकानां जगत्सर्जनहेतूनां शब्दानामिति बोध्यम् ॥

भगवता जैमिनिमहर्षिणा "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध-स्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थे" इत्यादिना शब्दस्य तदर्थस्य तत्संबन्धस्य वाच्यवाचकभावरूपस्य च नित्यत्वं प्रत्यपादि । वेदस्य अर्थप्रत्यायकत्वाधिकरणे च पदपदार्थसंबन्धानां नित्यत्वेऽपि वाक्या-र्थानां वाक्यैस्सह संबन्धस्य सांकेतिकत्वेन संकेतग्रहसापेक्षतया वक्त्रिच्छा-घटकतात्पर्यज्ञानसापेक्षतया च पुरुषसंबन्धतो भ्रमप्रमादादिदोषसंभ-वान्न विधिवाक्यानां ऐकान्तिकं प्रामाण्यमिति पूर्वपक्षं कृत्वा पदै-रभिहिता एव पदार्थाः स्वबोध्यसंबन्धरूपया लक्षणया वाक्या-र्थभूतां विशिष्टां भावनां समभिव्याहारविशेषबलाद्विशिष्य बोधयन्ति । भावनाविशेष्यकबोधस्य सर्वविधिष्वैकरूप्येण न तदानन्त्यप्रयुक्तसंब-

न्धाग्रह । तात्पर्य च शब्दगन एव धर्मविशेषः । तद्ग्राहकश्चाध्य-यनविध्यादिरेवेति न पुरुषसबन्धप्रयुक्त विधीनामप्रामाण्यमित्यव-धृतम् ॥

तदुत्तरस्मिन् वेदापौरुषेयत्वाधिकरणे वेदा पुरुषकल्पिता वाक्यत्वात् भारतादिवाक्यवदित्यनुमानात् "तस्मात्त पानेभ्य त्रयो वेदा अजायन्त" इत्यादित वेदानामुत्पत्तिकथनात् काठक काला-पकमितिसमाख्यावशाच्च वेदाना पौरुषेयत्वमाशङ्क्य अजायन्तेत्यत्र जनिधातोराविर्भावार्थकत्वात् वाक्यहेतुकानुमानस्य च अप्रयोजकत्वात् जन्यज्ञानमूलकत्वेन सोपाधिकत्वाच्च वेदानां कर्तुरस्मरणाच्च अपौरुषे-यत्व साधितम् । नचानादरात्कर्तुरस्मरणमिति वचन भव्यम् । अक्षरशो विस्मरणाभावाय शिक्षादीन्रचितवता सर्वज्ञानामृषीणा तदधीनप्रामा-ण्यकस्मृतिकर्तृसामान्यमप्रविस्मरतां वेदकर्त्रनादरोक्तेरतिसाहसत्वात् । अत एव—

वाचाविरूपनित्यया ।

अनादिनिधना नित्या वागुत्सृष्टा स्वयभुवा ॥

इति श्रुतिस्मृतय उपसद्यन्ते । समाख्या तु प्रवचनमित्युक्तम् ।

औपनिषदाना मते "अस्य महतो भूतस्य नि श्वसितमेत-दृग्वेद" इत्यादिना वेदाना जन्यत्वेऽवधारितेऽपि कल्यादौ प्रवच-ननिमित्ता श्रुतिस्सभवतीत्यपौरुषेया एव वेदाः । वियदादिप्रपञ्च-वत् उत्पत्तिमत्त्वेन परमेश्वरकर्तृकतया पौरुषेयत्वादपौरुषेयत्वं वेदानां भज्येतेति चेत् न हि पुरुषेणोच्चार्यमाणत्वं पौरुषेयत्व, मीमासकमतेऽपि अध्यापकपरंपरया पौरुषेयत्वापत्तेः । नापि पुरुषाधीनोत्पत्तिकत्वं पौरु-षेयत्वं, नैयायिकाभिमतपौरुषेयत्वानुमाने अस्मदादिना सिद्धसाधनत्वा-पत्तेः । किंतु सजातीयोच्चारणानपेक्षोच्चारणाविषयत्वं पौरुषेयत्वं, तथा

च सर्गाद्यकाले परमेश्वर पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीक वेद रचयामीति सकल्प्य तादृश वेद कृतवान् नतु तद्विजातीयानुपूर्वीकम् । पूर्वसर्गसिद्धवेदसजातीयाध्ययनस्यैव अभ्युदयनिःश्रेयसहेतुत्वात् । अन्यथा तस्य वाग्वज्रतया अनर्थहेतुत्वापत्तेः । वेदाना नित्यसर्वज्ञपरमेश्वरप्रणीतत्वेन प्रामाण्यमिति नैयायिका । वेदानां नित्यत्वेन निरस्तसमस्तपुंदूषणतया प्रामाण्यमित्यध्वरमीमासका ॥

यद्यपि सकल त्रैलोक्य परित्यक्तनामरूप निर्लेप प्रलीयते समुत्पद्यते चाभिनवमिति श्रुतिस्मृतिवादा वदन्ति । तथापि प्रभवप्रलययोरनादित्व ससारवदवश्यमेष्टव्यम् । यथाचानादौ ससारे स्वापप्रबोधयो प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहार आजस्येनोपपद्यते तथा कल्पान्तरप्रभवप्रलययोरपि व्यवहारस्सभवतीति वेदितव्यम् ।

अत्रच काचनाशङ्का प्रवर्तते—स्वापे पुरुषान्तरव्यवहाराविच्छेदात् स्वस्य च सुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसधानसंभवादनिरुद्धमनुसधानादिकम् । महाप्रलये तु सर्वव्यवहारोच्छेदाज्जन्मान्तरव्यवहारवत्कल्पान्तरव्यवहारस्य अनुसधातुमशक्यत्वाद्वैषम्यं भवतीति चेत्—अत्र समाहित भगवद्भि श्रीशकरभगवत्पादै. देवताधिकरणे—“महाप्रलये सर्वव्यवहारोच्छेदे सत्यपि परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसधानमुपपद्यते । यद्यपि प्राकृतानां प्राणिनां जन्मान्तरीयव्यवहारानुसंधान न दृश्यते तथापि प्राकृतवदीश्वरैरपि भवितव्यमिति न नियमः । यथा हि प्राणित्वाविशेषेपि मनुष्यादिस्तंबपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्ध परेण परेण भूयान् भवन् दृश्यते । तथा मनुष्यादिष्वेव हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतत् श्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणं

न शक्य नास्तीति वदितुम्' ततश्चातीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणा हिरण्यगर्भादीना वर्तमानकल्पादौ प्रादुर्भवता परमेश्वरानुगृहीताना सुप्तप्रवुद्धवत्कल्पान्तरानुसधानमुपपद्यते" इति ॥

ननु दार्शनिकैर्निरवयवस्येश्वरस्याङ्गीकारात् मुखादीनामवयवानामभावे कथ वेदमुपादिक्षदिति। हन्त भो निरवयव ईश्वर' कथमतिविचित्र पाञ्चभौतिक जगन्निर्ममे इति कुतो नाप्राक्षी'। तदपि कथमिति चेत्परमेश्वर सर्वज्ञस्सर्वशक्त स्वशक्त्याऽघटितघटनापटीयस्या मायया जगत्सृजति रक्षत्यत्ति च। तस्य शक्ति कल्पशतेनापि वेदितु को वा प्रभवेत्। तथात्र श्रुतयः—

अणोरणीयान्महतो महीयान्।
अपाणिपादो जवनो गृहीता पश्यत्यचक्षु. स श्रृणोत्यकर्णः॥
न सद्दशे तिष्ठति रूपमस्य। इत्याद्या ॥

वेदाना नित्यत्वे इन्द्राग्न्यादयः शब्दा गौतमभरद्वाजविश्वामित्रादयः शब्दा वेदेषु श्रूयन्ते। तेषामिन्द्रादीनां प्रभाव "इन्द्रस्य नु वीर्याणि प्रवोच यानि चकार प्रथमानि वज्री। " अग्ने नय सुपथा राये अस्मान्" इत्यादयो मन्त्राः प्रकाशयन्ति। तत्कथंकार वेदाना नित्यत्वश्रद्धा युज्यत इत्यर्वाचीना आक्षिपन्ति ॥

अत्रापि विषये समाहित भाष्यकारैस्तस्मिन्नेवाधिकरणे— "सेनापत्यादिशब्दवदिन्द्राग्न्यादिशब्दा स्थानविशेषसबन्धनिमित्ता.। ततश्च योयः तत्तत्स्थानमधिरोहति सस इन्द्राग्न्यादिशब्दैरभिधीयत इति न दोषः" इति ॥

एव सप्तर्षिदेवादिशब्दा अपि स्थानवाचिनः। अत एव विष्णुपुराणे इन्द्रादीनां सप्तर्षीणा प्रतिमन्वन्तरं नामभेदः—

सुशान्तिर्नाम देवेन्द्र मैत्रेयासीत्सुरेश्वर· ।
सुधामान तथा सत्या शिवाश्चाथ प्रतर्दना ॥
वशवर्तिश्च पचैते गणा द्वादशका स्मृताः ।
वसिष्ठतनयास्तत्र सप्त सप्तर्षयोभवन् ॥

इत्यादिना तृतीयेंशे प्रदर्शित· । गवादिव्यक्तिषु उत्पद्यमाना-स्वपि आकृतीना नित्यत्वात् न गवादिशब्देषु श्रुतेष्वपि नित्यत्वविरोध· । महासर्गमहाप्रलययोः जगत अभ्युपगम्यमानयोस्सतोरपि आवृत्तौ समान-नामरूपत्वात् शब्दनित्यत्वविरोधो नास्ति । तथाच "सूर्याचन्द्रमसौ" इत्यादिश्रुति अस्मिन्प्रमाणत्वेन प्रदर्शिता । मनुश्च—

ऋषीणां नामधेयानि याश्च वेदेषु दृष्टय ।
शर्वर्यन्ते प्रसूताना तान्येवैभ्यो ददात्यज· ॥
यथर्तुष्वृतुलिङ्गानि नामरूपाणि पर्यये
दृश्यन्ते तानितान्येव तथाभावा युगादिषु ॥
यथाभिमानिनोऽतीतास्तुल्यास्ते साम्प्रतैरिह ।
देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ॥

इत्यादिना समाननामरूपत्वमभ्यधात् । देवतावाचकान् ऋषि-वाचकांश्च शब्दान् एकव्यक्तिबोधकान् मत्वा तदुत्पत्त्यनन्तरमेव तन्माहात्म्यबोधकाना मन्त्राणां प्रसरणं न्याय्यमिति आधुनिका अवग-च्छन्ति । एतदपि पूर्वोक्तयुक्त्यैव फल्गूकृतं, यतोऽत्र गौतमभरद्वाजशौ-नकविश्वामित्रादय· शब्दा बह्वीषु व्यक्तिषु रूढा· परिदृश्यन्ते । तथाहि—न्यायशास्त्रप्रवर्तकः व्यासशिष्यः अक्षपादः गौतम इति व्यवह्रियते । सामगानां धर्मसूत्रप्रवक्ता गौतम इति कथ्यते । शतान-न्दपिताऽहल्यापतिः गौतम इति व्यपदिश्यते । "अभित्वा गौतम"

इत्यादिमन्त्राणा साक्षात् द्रष्टा नोधानामगौतम इत्युच्यते । वैवस्वत-मन्वन्तरे—

वसिष्ठ कश्यपोथात्रि· जमदग्निस्स गौतम. ।
विश्वामित्रभरद्वाजौ सप्त सप्तर्षयो विदु ॥

इति सप्तर्षिघटकीभूतोऽपि कश्चन गौतम इत्याख्यायते । कठ-वल्या नचिकेतस पितारं वाजश्रवसं शान्तसकल्प· सुमना यथा स्यात् वीतमन्युर्गौतमो माभिमृत्यो'' इति मन्त्रेण कथ्यमानः गौतमः अपर. । बौद्धशास्त्रप्रवर्तक· गोतम इति प्रसिद्ध एव । एव शाखाप्रवर्तक भरद्वाज एक । सप्तर्षिघटकीभूत भरद्वाज· अन्य । वाल्मीकिशिष्य भरद्वाज अपर.। प्रश्नोपनिषदि निर्दिश्य-मान सुकेशानाम भरद्वाज· अन्य आयुर्वेदप्रतिष्ठातृशक्रशिष्यः उग्रतपा नाम भरद्वाजो भिन्न । भागवते दशमस्कन्धे—

द्वैपायनो भरद्वाज· सुमन्तुर्गौतमोसित. ।
विश्वामित्रो वामदेव वसिष्ठ ॥

इत्यादिना धर्मराजयज्ञे सदस्यत्वेन निर्दिष्ट· भरद्वाज. पृथक् । एव ऋचां द्रष्टा काश्यपः भिन्न । सप्तर्षिघटकीभूत काश्यप. अपर· । व्यासशिष्येण सूतेन पुराणमध्यापितः काश्यप एक इत्येतेषा ऋषीणां को नाम परीक्षक. सम्यगपरीक्ष्य ऐक्यमाख्यातु कल्पेत ॥

वेदेषु पुराणादिषु वा श्रूयमाणाना भृगुभरद्वाजगौतमादीनामृ-षीणा नामानि न प्रातिस्विकानि । अपितु गोत्रादिसंबन्धेन वा, उपा-स्यविद्यादिसंबन्धेन वा प्रवृत्तानि अनेकव्यक्तिसाधारणानि । समाननाम-धेयानां विभिन्नकालिकाना स एवाय भरद्वाजस्स एवाय गौतम इत्यैक्यमीक्षितुं न युक्तं विशेषसमीक्षादक्षाणाम् ॥

एवं ऋग्वेदे—

त्वमग्ने मनवे द्यामवाशय पुरूरवसे सुकृते सुकृत्तरः ।

पुरूरवः पुनरस्त परेहि ।

त्वामग्ने प्रथममायुमायवे देवा अकृण्वन्नहुषस्य विश्पतिम् ।

इत्यादिमन्त्रेषु नहुषपुरूरवप्रभृतीनां राज्ञां चरितस्य प्रकाशनादनादित्वं भज्येतेति पुनरप्याशङ्का । मन्त्रनिर्दिष्टानां शब्दानां राजसामान्यवाचकत्वाच्छब्दप्रवाहस्य चानादित्वाङ्गीकारान्निरस्ता वेदितव्या ॥

एवं च वेदानां स्वतन्त्रस्य कर्तुरस्मरणात् तेभ्यः शब्देभ्यः देवादिव्यक्तीनामपि प्रभवाभ्युपगमादीश्वरस्य च पुरुषान्तरसाधारणसंशयभ्रमविस्मरणादिदोषाणां कल्पनेन सर्वज्ञत्वभङ्गाभिया पूर्वकल्पीयवेदानुपूर्वीं स्मृत्वा ब्रह्मादिभ्यः उपदिदेशेत्यवश्यमभ्युपगन्तव्यत्वात् वेदानां नित्यत्वं सिद्धमिति आधुनिकः निरङ्कुशस्वोत्प्रेक्षापरिकल्पितः युक्तिप्रमाणविरुद्धः वेदब्राह्मणयोः कालनिर्णयः अनादरणीय एव ॥

आर्यसमाजप्रवर्तकः दयानन्दसरस्वतीनामापि स्वकृतवेदभाष्यभूमिकायां बहुभिः प्रमाणैः वेदानां नित्यत्वं प्रसाध्य विल्सन् म्याक्समुलर् प्रभृतीनां सिद्धान्तः भ्रममूल इत्याभिधाय बहुशतकोटिवत्सरेभ्यः प्राक् वेदाः प्रकाशिता इति स्पष्टमुद्घोषयामास ॥

यद्यपि "तस्माद्यज्ञात्सर्वहुतः ऋचस्सामानि जज्ञिरे । अग्नेः ऋग्वेदः वायोर्यजुर्वेदः आदित्यात्सामवेदः" इत्यादि श्रुतिभ्यः वेदानामुत्पत्तिरवगतेव भाति । वेदानामपौरुषेयत्वमुररीकुर्वता मनुना इयमाशङ्का परिह्रियमाणा दृश्यते—

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।

दुदोह यज्ञसिध्यर्थमृग्यजुस्सामलक्षणम् ॥

अस्यायमर्थः—पूर्वकल्पे ये वेदाः त एव महाप्रलये परमात्मनि सूक्ष्मरूपेण स्थिताः। तानेव स्मृत्यारूढान् कल्पादौ अग्निवायुरविभ्य आनकर्ष यज्ञसिध्यर्थं यज्ञाना त्रयीमपायन्वेन आपीनस्थक्षीरवद्विद्यमानानामेव वेदानामभिव्यक्तिप्रदर्शनार्थं आकर्षणवाचकं गौणं दुहिधातुं प्रयुक्तः। अत एव दुहिधातोराकर्षणार्थत्वादाग्निवायुरवीणां नाकथितकर्मत्वं, किंत्वपादानत्वमेव सनातनत्वविशेषणस्वारस्यात्पूर्वोक्तार्थं ममुन्मिषतीति सुधीभिः सम्यक्मनोद्रष्टव्यम्॥

एवं वेदवद्वेदाङ्गाना व्याकरणनिरुक्तज्यौतिषादीनां सनातनत्वमनायासेनैवागम्यते। यथा—भगवान् पाणिनिः स्वकृताष्टाध्याय्यां व्याकरणप्रवक्तृणा भूयसा पूर्वाचार्याणामस्मार्षीत् शाकटायन, स्फोटायन आपिशलि, शाकल्य, भारद्वाज, गालव, पौष्करसादीनाम्। अर्वाचीनो वोपदेवोपि—

> इन्द्रः चन्द्रः काशकृत्स्नापिशली शकटायनः।
> पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ हि शाब्दिकाः॥

इति कविकल्पद्रुमे प्रोवाच। पाणिनिमुनिना च स्मृताः शाकल्यगार्ग्यप्रभृतयः शब्दशास्त्रनदीष्णाः कदा भुवमलचक्रुः। कदा कदा प्राचीनानि व्याकरणशास्त्राणि सजगरिरे इत्यादिविषया, निपुणमतिभिः निराक्षेपं निरूपयितुं नितरां न शक्यन्त इति वेदाङ्गव्याकरणस्य वेदसंरक्षकस्य वेदवत्परमप्राचीनत्वमपहर्तुं को वा जन ईष्टे॥

एतेन आर्यावर्तीयानां वर्णपरिचय एव नासीत्। वेदराशिः परं गुरुपरपरया यथाश्रुतमेवाभ्यस्यमानोऽभूत्। वर्णलेखस्तु पाणिनिमुनिमारभ्यैव परिचितोऽवर्तत। वेदेषु लिखधातो प्रयोगादर्शनात्। व्यत्येति कियत्यपि काले मिश्रदेशनिवासिभ्यः अन्येभ्यो वा वैदेशिकेभ्यः सेयं लेखनकला समगृह्यत भूयसा भारतीयैरिति निश्चयं कुर्वतां

पाश्चात्यविपश्चितामुक्तिरपि परास्ता । यतः "दिवाविभानिशा" इत्यादिसूत्रे पुरापि स्थितयोः लिपिकरलिविकरशब्दयोः साधुत्व-मन्वशास्यत भगवता पाणिनिना । शब्दशास्त्रमपूर्वं पाणिनिमुनिर्न निर्ममे । किंतु वेदलोकसिद्धानामेव शब्दानामनुशासनं प्रादर्शयत् । पाणिनेः प्राग्लिखधातोः प्रयोग एव नासीदिति सुस्पष्टं जल्पितुमनर्हम नल्पानां पण्डितप्रकाण्डानाम् । 'स्फ्येनोल्लिखति' परिलिखितं रक्षः । यत्सीमन्तं ककस्ते लिलेख" इत्यादयश्शब्दा मन्त्रब्राह्मणभागे श्रूयन्ते । न हि कश्चिदपि धन्यो वैयाकरणमूर्धन्यः यथा मनोरथमभिनवान् शब्दान् निर्मातुमीष्टे । पाणिनिमुनिश्च स्वकृतशिक्षायां 'गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः" इत्यादिना लिखितपुस्तकसाहाय्येन वेदपाठमभ्यस्यतो दोषं प्रदर्शितवान् । अतः पाणिनेः पूर्वं लेखनक्रमः अवर्तिष्टेति सुस्पष्टमूहितुं प्रगल्भते जनः ॥

पाणिनिमुनेरपि प्रत्नेन वाल्मीकिमहर्षिणा रामायणे "रामना-माङ्कितं चेदं पश्य देव्यङ्गुळीयकम्" इति कथितम् । लिपेरपरिज्ञाने अङ्गुळीयकस्य अक्षराङ्कितत्वं कथमपि न सिध्येदिति पण्डितप्रकाण्डा एव स्वरसं स्वान्ते समालोचयन्त्विति तूष्णीमास्महे ॥

एवं व्याकरणवद्यास्कमुनिप्रोक्ते निरुक्तेऽपि शाकपूणिप्रभृतयः बहवः निरुक्ताकाराः स्मृता इति वैदिककोशरूपस्य मन्त्रप्रतिपाद्यदेवता-स्वरूपप्रकाशकस्य च निरुक्तस्य परमप्राचीनत्वं विदांकुर्वन्तु सन्तः ॥

ज्योतिःशास्त्रस्यापि सनातनत्वं निर्विवादं सिध्यति । तथाहि —

क्रतुक्रियार्थं श्रुतयः प्रवृत्ताः कालाश्रयास्ते क्रतवो निरुक्ताः ।
शास्त्रादमुष्मात्किल कालबोधो वेदाङ्गताऽमुष्य ततः प्रसिद्धा ॥

इति श्रीपतिप्रोक्तदिशा श्रौतस्मार्तनिखिलकर्मानुष्ठानोपयो-

गित्वेन सकलव्यवहारनिर्वाहकत्वेन च कालः सर्वैरभ्युपेयते । वैशेषिक-ज्योतिषिकयोर्मते कालस्य नित्यत्वाङ्गीकारेऽपि वेदवादिभिः ॥

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥

इत्यादिप्रमाणबलात् गुणत्रयपरिणामित्वाच्च अनित्यत्वमभ्युपगतम् । एतादृशकालस्वरूपविज्ञानं ग्रहनक्षत्रादिगतिप्रदर्शकज्योतिश्शास्त्रबलादेव सिद्ध्यति नान्यस्मात् । एतादृशं ज्योतिश्शास्त्रं वसिष्ठ वागीश्वर गार्ग्यमुख्यैः महर्षिभिः विस्तरतः कृतं पराशरार्यभटादयः क्रमेण सचिक्षिपुः । न त्वेतच्छास्त्रमर्वाचीनोपज्ञम् । वसिष्ठादिपरपराया सृष्टिकालादारभ्य विद्यमानत्वात् । अस्य च शास्त्रस्यायुर्वेदवत्प्रत्यक्षात्मकत्वात्सकलशास्त्राभ्यर्हितत्वम् ॥

सूर्याब्दसङ्ख्यया ज्ञेयाः कृतस्यान्ते गता अमी ।

खचतुष्टयमाब्ध्यग्निशररन्ध्रनिशाकराः ॥ (१९५३७२००००)

एषु वत्सरेषु सृष्ट्यादितः गतेषु मयासुरः सूर्यसिद्धान्तरीत्या ग्रहानयनमकार्षित् । ततः पराशरः ततः आर्यभटः कलेरादौ ग्रहानयनं पराशरमतरीत्या चकारेति 'कलिसंज्ञे युगे पादे पराशर्यमतं प्रशस्तमतं' इति प्रमाणतोऽवगम्यते । ज्योतिश्शास्त्ररीत्या ग्रहनक्षत्रादीनां शतकोटिवत्सरेभ्यः प्राग्विद्यमानत्वेन तन्निर्णायकशास्त्रस्यातिपुरातनत्वमुररीकर्तव्यम् ॥

दर्शनेषु प्रधानीभूते वेदान्तशास्त्रप्रवक्तृवेदव्यासविरचितसूत्रसंदोहे बादरि जैमिनि औडुलोमि काशकृत्स्न आश्मरथ्यादीनां वेदान्तसंप्रदायप्रवर्तकानामाचार्याणामभिख्याग्रहणेन वेदार्थज्ञानमन्तरा केवलवेदग्रहणस्य "स्थाणुरयं भारहारः" इत्यादिभिर्दूषितत्वात् वेदार्थनिर्णयार्थं

पूर्वोत्तरमीमांसाशास्त्रयोर्विरचितत्वाद्बहो. कालात्पूर्वं दर्शनानां स्थितिसिद्धे. वेदान्तादिशास्त्रस्य नूतनत्वमाख्यातुमसाम्प्रतम् ॥

साख्यवैशेषिकादिदर्शनेषु. वेदान्तशास्त्रदूषण, वेदान्तशास्त्रे च नदितरसकलशास्त्रदूषण दरीदृश्यते । नचैतावता पौर्वापर्यं प्रत्येतु पण्डितप्रकाण्डोऽपीष्टे । आधुनिका पुन बौद्धजैनशास्त्रदूषण वेदान्तादिशास्त्रेषु निबद्धमिति बौद्धजैनशास्त्ररचनानन्तर वेदान्तशास्त्र रचितमिति स्वोत्प्रेक्षया समक्षिन्ते । परीक्षकास्तु वेदेष्वेवासद्वादादर्शनात् तदर्थनिर्णायकेषु शास्त्रेषु असद्वादादीना पुरा प्रवृत्ताना निराकरण नितरा युक्तमिति सद्वादासद्वादयो द्वैताद्वैतवत्सर्वकालिकत्व सूक्ष्मेक्षितया प्रतीक्षन्त इति दर्शनाना परमप्राचीनत्व सिद्धम् ॥

एतेन नव्यपाश्चात्यविपश्चिद्भि परिकल्पितः मूलप्रमाणरहित. युक्तिरहितः वेदादिग्रन्थसमयविमर्शः प्रत्युक्त· प्रत्येतव्य इति शम् ॥

**के. गोपालकृष्णशास्त्री.**

॥ श्री ॥

## श्रीमन्महाराज संस्कृतपाठशालावृत्तान्तः.

अक्षयसवत्सरीय विद्यार्थिपारितोषिकसभैषा· श्रीमन्महाराज श्री कृष्णराजेन्द्रस्य पट्टाभिषेकमहोत्सव स्मृतिपथमुपनयन्त्या माघशुक्लसप्तम्या भौमवासरे महापाठशालाया प्रामादे प्रात श्रीमतो विद्यागणपतेराराघन श्रीमन्महाराजकुलस्याशीर्वाद च पुरस्कृत्य साय राजधानीविवासिभिः वैदिकलौकिकमहाशयै प्रागेवाकारितै· विभूषिता श्रीश्री ॥ परकालमठदिव्यपीठमलकुर्वाणै श्रीमदभिनवरङ्गनाथ ब्रह्मतन्त्रपरकालस्वामिभिरग्र्यासनासीनैराधिष्ठिता प्रावर्तत ॥

तत्र च महापाठशालाविद्यार्थिनश्चत्वारश्चतुरा· प्रथमं स्वागतप्रद्यान्यातिमनोज्ञानि, साहित्योपाध्यायेन श्रीमता भाग्यपल्लिश्रीनिवासाचार्येण प्रणीतान् प्रास्ताविकान् संस्कृतश्लोकान् राजकविभूषणेन श्रीमता लिङ्गराजेन विरचितान् कर्णाटकश्लोकांश्चोभौ शुभकण्ठौ विद्यार्थिनौ चापीपठन् ॥

ततः पाठशालाकार्यनिर्वाहकसमितेः कार्यदर्शी पाठशालाध्यक्षः श्रीमान् चक्रवर्ति रामानुजय्यंगार्यः अक्षयसवत्सरीयकार्यकलापवृत्तान्तं न्यवेदयत् । तदेष साराशः—श्री ॥ महामहोपाध्याय–वेदान्तविशारद–

पञ्चापगेशशास्त्रिणा श्री ॥ ज्योतिषरत्न नरहरिज्यौतिषिकाणां च पाठ-शालाकार्यादुपरमणे तेषां स्थाने श्री ॥ महामहोपाध्याय-विद्यानिधि-विरूपाक्षशास्त्रिणा श्री ॥ करूरु शेषाचार्याणां च नियमनं, वेदशास्त्र-पोषणीसभासदस्यैश्च सभामुख्योद्देशससिद्ध्यै कृतं कार्यव्यवस्थापनं, विद्यार्थिनां सङ्ख्याभिवृद्ध्ये अशनवसनविषयेऽप्यधिकसाहायकपरिकल्पनं पाठशालाविषये श्रीमता महाराजेन तत्सचिववर्येण च प्रकाशीक्रियमाणस्यादरातिशयस्य कृतज्ञताप्रदर्शनं चेत्यादयः बहवः विषयाः संक्षिप्य संसूचिताः ॥

ततश्चास्मिन् संवत्सरे परीक्षायामुत्तीर्णानामुत्तमानां षट्चत्वारिंशतो विद्यार्थिनां पञ्चाशत्संवत्सरमहोत्सवे कवित्वोपन्यासादिस्पर्धाया-मुत्तमं पदमधिरूढानां सप्तानां विद्यार्थिनां च पारितोषिकविनियोगाद-नन्तरं मद्रास् प्रेसिडेन्सि कालेज् नामकमहाशालासंस्कृतमुख्योपाध्यायाः एस्. कुप्पुस्वामिशास्त्रिण' ए. एं ऐ इ एस्. महाशयाः संस्कृत-प्रौढविद्याव्यासंगविषयेण सर्वोत्तमेन प्रसन्नमधुरेण सरसहृदयाह्लादक-रेण गम्भीरभावगर्भेण संस्कृतभाषामयेनोपन्यासेन इदानींतनसमये संस्कृत-भाषाया आवश्यकमध्ययनक्रमं भाषाभिवृद्ध्युपायं पाश्चात्यरीतिषूपादेय-मंशं चेत्येवमादिकमनेकमर्थं विशदीकृत्य सदस्यान् सर्वानानन्दयामासुः ॥

ततस्सभाध्यक्षभाषणादनन्तरं पाठशालाध्यक्षः सर्वं कार्यजातं निर्व्यूढवतामध्यक्षाणां महतो दूराद्देशादेतदुद्देशेनैवेमां राजधानीमलंकृत्य अपूर्वेणोपन्यासेन सर्वानानन्दयतामुपन्यासकानां सभां चेमां विभूषयतां राजधानीयमहाशयानां च कृतज्ञतासूचनसहितानि वन्दनानि समार्पयत्, समाप्ताच्च सभेयं श्रीमन्महाराजकुलस्य श्रेयःप्रार्थनावतंसवती ॥

---

इह किलेदानीं महापाठशालाकार्यनिर्वाहकसमितेरध्यक्षाः श्रीमन्महाराजस्य (असिस्टेंट्-प्रैवेट्-सेक्रिटेरि) उपान्तरङ्गामात्याः श्री एस्. पि. राजगोपालाचार्याः बेंगळूरुनगरे एक्सैज्-कमीषनर् पदमध्यारोहन् । तत्समये तेषां महाशयानां पाठशालीयाः विद्वांसः विद्यार्थिनः राजधानीयाः सर्वे विबुधाः वैदिकलौकिकाग्रगण्याः केचन महान्तश्च सम्भूय कृतज्ञतामहोत्सवं कंचन (७-४-२७) शुभदिने पाठशालाप्रासाद एव समारभन्त । यथा—

सुखासीनेषु सर्वेषु सदस्येषु महातिथिवर्येषु गीर्वाणभाषामयान् श्री॥ राजगोपालाचार्याणां कल्याणगुणप्रकाशकान् कांश्चन श्लोकान् श्री॥ सकीघट्ट वेंकटाचार्याः, श्री॥ गुम्मगट्ट वेंकटनरसिंहशास्त्रिणश्चावाचयन् । ततः धर्माधिकारि॥ श्री॥ पेरियकोळ रामचन्द्राचार्याः महाविद्वान् । श्री॥ रामशेषशास्त्रिणश्च कर्णाटकभाषयैवावितथया यथार्थया सारवत्तरया सकलजनहृदयङ्गमया इत्थमचकथन्—तथाहि—एते पुनः आचार्याः परमसात्त्विकाः सत्त्वोत्तरकुलप्रसूताः विद्यावन्तः धीराः उदाराः करुणाशालिनः सुलभाश्च, पारमार्थिक्या परार्थैकप्रवणया धिया कार्यं कुर्वाणाः, नहि केवलं सर्वेषां उपकारिणः अपितु वैदिकमण्डलस्य विशिष्योपकारकल्पने बद्धादराः निस्पृहाः निष्पक्षपाताः विद्वज्जनविषये श्रीमतो महाराजस्याजनसिद्धां प्रीतिं काले काले सफलीकरणे समुचितावधानाः महापाठशालायाः विदुषां विद्यार्थिनां च बहुविधानुपकारान् कृतवन्तः परीक्षादिकार्यक्रमं उत्सवादीनां रीतिं च निराबाधं प्रचारयन्त एवमादिसकलगुणसमलंकृता विजयन्ते । एतेषां पुनरिदानीं विरहोऽस्मानतीव व्याकुलयति । तोषयति च परं अधिकमधिकारपदाधिरोहणं चेति ॥

ततश्च सान्तेवासिना वेदाध्यापकप्रवरणा आशीर्वादपाठादनन्तर पाठशालाध्यक्ष श्री॥ चक्रवर्ति रानानुजयगार्य. सक्षेपेण श्रीराजगोपाला-चार्यगुणान् कथयित्वा पण्डितानां प्रार्थनामगीकृत्य केवलयैव करुणाया अतिथिवर्याणां सन्निधान सभा चालकुर्वतां महाजनाना सौलभ्य चाधिकृत्य कृतज्ञतया धन्यवा दानकथयत् ।

सभाचैषा इत्थ समपूर्यत ॥

॥ श्रीरस्तु ॥

## अथ पूर्वमीमांसाभाष्यभूषणप्रारम्भः

अभिवन्द्य महोदारामस्मद्गुरुपरम्पराम् ।
कुर्वे शाबरभाष्यस्य तर्कपादस्य टिप्पणीम् ॥

प्रबन्धोऽयं कृतिकृते कुमारिलमते पथि ।
लिखितः श्रीनिवासेन मीमांसाभाष्यभूषणम् ॥

यद्यपि श्लोकवार्तिकादीनां अतिविस्तरप्रबन्धानां पर्यालोचनया विशिष्टो वाक्यार्थनिर्णय आयुष्मद्बुद्धिमज्जनप्रचुरेषु देशकालेषु संभवति। तथापीदानींतनपुरुषाणां विलम्बासहिष्णूनां च कृते सारार्थमात्रप्रकाशनतत्पराऽल्पाक्षरा वृत्तिरावश्यकीति युक्तोऽस्माकमप्येष प्रक्रमः ॥

मीमांसा हि भर्तृमित्रादिभिः प्राचीनैः वृत्तिकारैः नित्यनिषिद्धयोरिष्टानिष्टफलं नास्तीतिवादिभिः लोके लोकायतीकृतेति तामास्तिकपथे कर्तुं श्रमिता कुमारिलेन श्लोकवार्तिक-तन्त्रवार्तिक-टुप्टीकाख्यानैः विस्तीर्णैः त्रिभिर्भागैः समलङ्कृतेन शाबरभाष्यव्याख्यानेन प्रयत्नः महान् कृतः । तमेव पन्थानमनुरुध्य तदीयोक्तिभिरेव तर्कपादस्य टिप्पणी सगृह्यते ॥

अथेदं शास्त्रारम्भसूत्रम्-- अथातो धर्मजिज्ञासेति ॥ अस्यायमर्थः—अथ गुरुकुलस्थितिपूर्वकवेदाध्ययनानन्तरं अतः अधीतवेदत्वात् [1] धर्मस्य वक्ष्यमाणलक्षणस्य जिज्ञासा तत्साध्यो विचारः कर्तुमर्ह इति ॥

---

[1] अयमतश्शब्दस्य भट्टाचार्यसम्मतोर्थः न्यायरत्नाकरः १८ पु अध्ययनस्यार्थज्ञानरूपफलवत्त्वादितीतराभिमतोर्थः ।

अयमत्र पूर्वपक्षसिद्धान्तसंग्रहः—

विनापि विधिना दृष्टलाभान्न हि तदर्थता ।
कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवत् ॥
लभ्यमाने फले दृष्टे नादृष्टफलकल्पना ।
विधेस्तु नियमार्थत्वान्नानर्थक्य भविष्यति ॥

अयमस्यार्थः—"स्वाध्यायोऽध्येतव्यः" इति शास्त्र अर्थज्ञानरूप प्रयोजनं अध्ययनस्य विदधत् तच्च ज्ञान विचारमन्तरेण न संभवतीति विचारशास्त्रमपि प्रयोजयतीत्यभिप्रेत्य जैमिनिश्शास्त्रमारब्धवान् । तत्राध्ययनस्यार्थज्ञानरूप फल दृष्ट लोकसिद्धमिति विधिः व्यर्थस्स्यात्, अतः विश्वजिन्नयायेन स्वर्गः फल कल्पनीय ततो विधि विचार न प्रयोजयतीत्यारम्भानर्हो विचार इति शङ्का ॥

संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात् विधेस्सार्थक्याय नियमार्थत्वमिष्यते । स च नियमः अधिकारिविषयकः । सोऽप्यधिकारी उपनीतस्त्रैवर्णिक एवेति समाधिः ॥

अन्ये नियमार्थमन्यथा वर्णयन्ति- यथा दर्शपूर्णमासजन्यं परमापूर्वं अवघातनियमजन्यमपूर्वं कल्पयति, एवमशेषक्रतुजन्यमपूर्वजात क्रतुज्ञानसाधनाध्ययननियमजन्य कल्पयतीति ॥

धर्मविषये तावदादौ द्वेधा विप्रतिपत्तिरुदेति—धर्मः किंप्रमाणकः? किंस्वरूपः? इति । तदेतस्य विप्रतिपत्तिद्वयस्यानेनाद्यपादेन निर्णय क्रियते । अत्र हि धर्मविषये प्रत्यक्षादे प्रामाण्यनिराकरणेन चोदनाप्रामाण्य साध्यते । तत्साधनादेव च तद्गम्याग्निहोत्रादिरेव धर्मः न चैत्यवन्दनादिरिति स्वरूपमपि सविशेष कथितं भवति ॥

एतच्च निरपेक्षप्रामाण्याभिप्रायेण सिद्ध्यति । चोदनैव हि निरपेक्षं प्रामाणम् । तत्प्रामाण्यं च इहैव पादे स्थापितं भवति । उप-

रितने तु पादत्रये तदेकवाक्यतया तन्मूलतयाचार्थवादादीनां च प्रामाण्यं स्थाप्यते । अतस्समस्तोऽयं प्रथमोऽध्यायः प्रमाणलक्षणमेव । द्वितीयादयस्तु भेदादिलक्षणाः । तदुक्तम्—

धर्मधी मानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः ।
सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः ॥

अत्रेदमवधेयम् —

अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम् ।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥

अयमाशयः — धर्मजिज्ञासायाः कर्तव्यतामुक्त्वा आरभ्यमाणं शास्त्रं धर्मप्रतिपादनार्थमिति गम्यते । अल्पायाससाध्येऽपि व्यापारे प्रवृत्ति-सिद्धये आवश्यं वक्तव्यमेव प्रयोजनम् । मीमांसायां तु व्याकरणादि-शास्त्रान्तरवशेन व्युत्पन्नपदपदार्थस्य वाक्यार्थसंदेहनिवृत्तये बहूनि विद्या-न्तराण्युपायभूतानि समाश्रितायां अज्ञाने दुर्ज्ञाने वा महाविषयत्वेन भूरिप्रत्यवायनिदानभूतायां बह्वायाससाध्यायां प्रयोजनमनुक्त्वा नैव शक्यं पुरुषान् प्रवर्तयितुमिति युक्तमादौ प्रयोजनाभिधानमिति ॥

एवं ज्ञातप्रयोजनं ज्ञातसंबन्धं च शास्त्रं श्रोतारः प्रवर्तन्ते श्रोतु-मिति संबन्धोऽपि शास्त्रावतारहेतुभूतः प्रथमं वक्तव्यः, स च संबन्धिनो-रभिधानादेव अर्थात् प्रतिपाद्यप्रतिपादकभावरूपः ज्ञायते इति न कण्ठ-रवेणोक्तः । भाष्यकारेण तु धर्मप्रसिद्ध्यप्रसिद्धिभ्यां आक्षिप्य सूच्यते ॥

---

॥ श्री ॥

## अथ शाबरभाष्यप्रारम्भः.

अथातो धर्मजिज्ञासा ॥१॥

लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति संभवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यम् । नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा । एवं वेदवाक्यान्येव एभिर्व्याख्यायन्ते । इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येया इति यत्नगौरवम् । तत्र लोकेऽयमथशब्दः वृत्तादनन्तरस्य प्रक्रियार्थो द्रष्टव्यः । न चेह किंचिद्वृत्तमुपलभ्यते । भवितव्यं तु तेन, यस्मिन् सति अनन्तरं धर्मजिज्ञासाऽवकल्पते । तदा हि यः प्रसिद्धपदार्थकः स कल्पितो भवति । तत्तु वेदाध्ययनम् । तस्मिन् हि सति साऽवकल्पते ॥

लोकेयेष्वित्यादि सति साऽवकल्पते इत्यन्तं भाष्यं अथशब्ददूषणतत्समाधानपरमिति सिद्धान्तः । अन्ये व्याख्यातारस्तु भवदासादयः लोके येष्वित्यादेः यत्नगौरवमित्यन्तस्य पञ्चार्थान्प्रचक्षते । न समुच्चित्य । किं तु केचिदन्य केचिदन्यमिति । अथ च तत्रलोके इत्यादेः सति साऽवकल्पते इत्यन्तस्य तु अथशब्ददूषणतत्समाधानपरतामेवाहुः । ते च पञ्चार्था एते—सर्वव्याख्या उपालम्भः प्रत्याख्यानं परिसंख्या स्तुतिश्चेति ॥

तत्र सर्वव्याख्या नाम—साधारणी विशिष्टा चेति सूत्रव्याख्या द्विविधा । सर्वसूत्रसाधारणीयं व्याख्या लोके इत्यादिना क्रियते ।

विशिष्टा तु प्रतिसूत्रं क्रियमाणा । अत्र भाष्ये–सूत्रेषु पदानि प्रसिद्धार्थान्येवेत्यवगन्तव्यामिति प्रवृत्तिमुपदिश्य नाध्याहारादिभिरेषा परिकल्पनीयोऽर्थ इति निवृत्तिरुपदिष्टा । तत्रैषामिति सर्वनाम्ना न प्रकृतप्रधानपदानां परामर्शः । किं तु मसम्यन्तनिर्दिष्टसूत्राणामिति ध्येयम् ।

अथैव साधारणव्याख्याया कृताया अनयैव ज्ञातार्थंसूत्रैः वेदवाक्यान्येव व्याख्येयानि भविष्यन्ति । न पुनः सूत्राण्यपीति सिद्धे विशेषव्याख्यानमसंगतमिति चेत्, अनयैव गतार्थप्रायेषु सूत्रेषु पश्चादल्पमेव वक्तव्यं भवतीति अल्पत्वादसत्त्वमुपचर्य एवशब्दः प्रयुक्तः ॥

सति संभवे प्रसिद्धार्थग्रहणं अध्याहारादिवर्जनं च प्रसिद्धमेवेति मन्दफलोऽयं सर्वव्याख्यानपक्ष इति नाद्रियते सुधीभिः ॥

अथोपालम्भपक्षः–अथात इति पदद्वय अर्थद्वयवाचितया लोकप्रसिद्धमपि भवदासेनैकपदीकृत्य आनन्तर्यमात्रार्थं व्याख्यातम् । तच्चायुक्तमिति श्रुतहानाश्रुतकल्पनालक्षणः उपालम्भः लोक इत्यादिना व्याख्यायन्त इत्यन्तेन क्रियते । सूत्रार्थ एवैव क्लिश्यतां दूरे वेदार्थनिर्णय इति वक्तृश्रोत्रोः प्रयत्नभार इति इतरथेत्यादिना गौरवमित्यन्तेनोच्यते इति ॥

अयमपि पक्षः मन्दफलः दौर्जन्यापादकश्चेति न समीचीनः ॥

अथ प्रत्याख्यानपक्षः —भाष्यकारो हि सूत्राणि पठित्वा वेदवाक्यान्युदाहृत्य तदर्थनिर्णये प्रयतते । न सूत्रार्थनिर्णये । तेनैवमाशङ्क्यते–किं सूत्राणामर्थशून्यता किंवा अर्थापरिज्ञता उताव्याख्यायतेति । तत्परिहारोऽयं प्रत्याख्यानेनोच्यते-न व्याख्येयानीति ॥

अयं च पक्षः सर्वथैव सूत्राणामव्याख्याने संगच्छते । व्याख्यायते च न्यूनत्वमधिकत्वं वा आशङ्क्य सम्यक्समर्थनादिना तत्रतत्र । निपुणतस्तु निरूपणे ब्रवीत्येव सूत्राणां तात्पर्यतोऽर्थमपि । पद-

च्छेदाद्यकरणादव्याख्यानभ्रम स्थूलचक्षुषाम् । किं च प्रत्याचिख्यासु न व्याख्यातव्यामित्येवावक्ष्यत्. अध्याहारादिभिर्न कल्पनीयोऽर्थ इति दुष्टव्याख्यानानिषेधात् दोषापेता व्याख्या न वार्यते । अतो न युक्तियुक्तोऽयमपि पन्थाः ॥

परिसख्यापक्ष एष – यत्र वेदसूत्रयोर्यथाश्रुतगृहीतयोः विरोधस्तत्र वेद यथाश्रुत व्याख्याय सूत्रमध्याहारादिभिर्नेयमिति अस्य भाष्यस्य तात्पर्यम् । यद्यपि प्रधानभूतवेदविरोधे गुणभूतानां सूत्राणां अन्यथाकरण प्रसिद्धमेवेति परिसख्याऽपि मन्दफला । तथापि न्यायाभासात् सूत्रकारबहुमानाच्च सुत्रमेव मुख्यमिति श्रोतारो भ्राम्येयुः । तद्भ्रान्तिनिराकरणेनार्थवत्येव परिसख्येति । भाष्यार्थस्तु–यदेतत्प्रसिद्धार्थग्रहण अध्याहारपरिभाषणादिवर्जनं च यत्नगौरवभयदाश्रयणीय प्राप्तमित्यनूद्य तत्सर्वं वेदाविरोधमभवे साति कर्तव्यमित्येवं विधिरूपस्य वाक्यस्य असति संभवे नेत्येवंनिषेधपरत्वादिति ॥

सूत्रेषु तत्र तत्रैवास्यार्थस्य निर्णयादियमपि व्याख्या मन्दोपयोगा ॥

तथैव मन्दोपयोगस्तुतिपक्षो यथा – लोके इत्यादिना सूत्रकारप्रशंसा क्रियते प्रसिद्धार्थपदप्रयोगात् न खलु शिष्याः क्लेशिता भवन्तीति ॥

अथ सिद्धान्तपक्षः—लोक इत्यादिना वृत्तमुपलभ्यते इत्यन्तेनाथशब्ददूषणमुच्यते । तदयमर्थ —

प्रसिद्धार्थपदैश्शक्य सूत्रैर्वेदार्थनिर्णय ।
पूर्ववृत्तापरिज्ञानादथशब्दो न तादृशः ॥ इति ॥

भवितव्यमित्यादि परिहारग्रन्थ । तस्यायमर्थः—अथ शब्दस्यानर्थक्ये अर्थान्तरवाचित्वे वा प्रसिद्धिबाधात् अनन्तर्यार्थत्वै स्थिते तद्बलेनैव किमप्युपपादकं कल्पनीयमिति सामान्येनोत्तरम् । तत्तु वेदाध्ययनमिति विशेषो दर्शितः ॥

नैतदेवं—अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा युक्ता। प्रागपि च वेदाध्ययनात् ॥

उच्यते—तादृशीं तु धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः या वेदाध्ययनमन्तरेण न संभवति। कथं—वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते ॥

अपिच नैव वयमिह वेदाध्ययनात्पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः। परस्ताच्चानन्तर्यम्। न ह्येतदेकं वाक्यं पुरस्ताच्च वेदाध्ययनात् धर्मजिज्ञासां प्रतिषेधयिष्यति, परस्ताच्चानन्तर्यं प्रकारिष्यति। भिद्येत हि तदा वाक्यम्। अन्या हि वचनव्यक्तिः पुरस्ताद्वेदाध्ययनात् धर्मजिज्ञासां प्रतिषेधेत।

नैतदेवमित्यादि युक्तेत्यन्त एक चोद्यभाष्यम्। प्रागपि च वेदाध्ययनादिति चोद्यान्तरम्। यद्यप्यत्र द्वितीय चोद्य पुनरुक्तमिव। तथापि इदानीं वेदार्थ एव धर्म इति न विज्ञातम्। नापि वेदवाक्यान्येव जैमिनीर्व्याख्यास्यतीति धर्ममात्र तु श्रुत्वा चैत्यवन्दनादेरपि धर्मत्वं भगवान् चोदितवान्। बुद्धागमपाठादेरनन्तरं धर्मजिज्ञासाऽपि संभवेदिति शङ्का वक्ष्यमाणमनालोच्य भवितुमर्हति। तथा च प्रागपीत्यस्यायमर्थः—अपि च प्राग्वेदाध्ययनात् बुद्धाद्यागमाध्ययनादनन्तर धर्मजिज्ञासा युक्ता। अतो न वेदाध्ययनानन्तर्यं तस्या इति ॥

तादृशीमित्यादि परिहारभाष्य चोद्यद्वयस्यापि बोध्यम्। तादृशीमित्यनेन बुद्धवाक्यपाठस्य निरासः ॥

अत्र द्वयमीप्सितम्—अधीत्यैव नानधीत्येति। तथा अनन्तरमेव नान्यत्कृत्वेति। अनयोर्वचनव्यक्त्योः एकोऽपि श्रौतोऽर्थो न विधीयते इत्याह—अपिचेत्यादिना वक्ष्यतीत्यन्तेन ॥

किन्तु अधीते वेदे द्वयमापतति। गुरुकुलाच्च समावर्तितव्यं वेदवाक्यानि च विचारयितव्यानि। तत्र गुरुकुलान्मा समावर्तिष्ट। कथं तु वेदवाक्यानि विचारयेत् इत्येवमर्थोऽयमुपदेशः ॥

यद्येव न तर्हि वेदाध्ययनं पूर्वं गम्यते। एवं हि समामनन्ति वेदमधीत्य स्नायादिति। इह च वेदमधीत्यास्नास्यन् धर्मं जिज्ञासमान इममाम्नायमतिक्रामेत्। नचाम्नायो नामातिक्रामितव्यः ॥

अन्या च परस्तादानन्तर्यमुपदिशेत। वेदानधीत्येत्येकस्यां विधीयते [अध्ययनं] अनूद्यानन्तर्यं, विपरीतमन्यस्याम्। अर्थैकत्वादेकवाक्यता वक्ष्यति ॥

किं तर्हि विधीयते तदाह–किन्त्वित्यादिना उपदेश इत्यन्तेन ॥ विपरीतमन्यस्यामिति ॥ वेदान्नानधीत्येति वाक्ये प्राक् प्रतिषेधो ज्ञायते इत्यर्थः ॥

गुरुकुलावसानस्य "अधीत्य स्नायात्" इति स्मृतिविहितस्य सकलब्रह्मचारिधर्मनिवृत्तिलक्षणस्य स्नानस्य निवृत्तिरस्मिन् सूत्रे लक्षणया विधीयत इति भावः ॥

अत्र भाष्ये प्रतिषेध शिष्म इत्यस्यानन्तर न ह्येतदेकमित्यतः प्राक् नापि परस्ताच्चानन्तर्यं शिष्म इत्यध्याहरन्ति। तादृशाध्याहृतवाक्यैकदेश एव परस्ताच्चानन्तर्यम् इत्यशः इदानीं भाष्यकोशे दृश्यते। वार्तिककृता पाठस्तु–शिष्मः। न ह्येतदेकमित्यात्मक इति निर्णयः ॥

स्नानजिज्ञासे हि युगपत्प्राप्ते मिथो विरुद्धे। यथा–"अधीत्य स्नायात्" इतिस्मृत्या अध्ययनानन्तरं स्नानं प्राप्तं, सौत्राथशब्देन अध्ययनानन्तर जिज्ञासा प्राप्ता। तत्र स्नानं स्मृतिप्राप्त प्रबलं, जिज्ञासा तु न्यायप्राप्ता दुर्बला बाधितव्येत्याशङ्कते–यद्येवमित्यादिना ॥

## अन्यसंस्कृतपुस्तकानि.

| | | |
|---|---|---|
| संस्कृतबालशिक्षा | ० | ३ |
| सरस्वतीप्रार्थना, श्यामलादण्डकं, नवरत्नमालाच | ० | २ |
| शब्दमञ्जरी (दृढपत्रात्मिका) | ० | ६ |
| यजुर्वेदसंन्ध्यावन्दनम् | ० | २ |
| आदित्यहृदयम् | ० | १ |
| महाकवि बोधायनकृत-भगवदज्जुकनाटकम् | ० | ६ |
| शिवानन्दलहरी | ० | २ |
| रुद्रनमकचमकम् | ० | २ |
| सौन्दर्यलहरी | ० | २ |
| पञ्चसूक्तानि | ० | २ |
| रामकर्णामृतम् | ० | ८ |
| बालरामायणम् | ० | २ |
| विवेकचूडामणि. | ० | ८ |
| कृष्णकर्णामृतम् | ० | ६ |
| „ आंग्लवादसहितम् | १ | ८ |
| शिवकवचम् | ० | २ |
| यजुर्वेदाह्निकम् | ० | ६ |
| श्रीवैष्णवाह्निकम् | ० | ८ |
| सूर्यनमस्कारमन्त्रा त्र्युच-ब्रह्मयज्ञचहितास्सस्वराश्च | ० | १ |
| लक्ष्मीनृसिंहस्तोत्रम् | ० | १ |
| श्रीगोविन्दद्वादश (चतुर्दश) मञ्जरिकास्तोत्रम् | ० | १ |
| मुकुन्दमाला | ० | १ |
| हिन्दी बालशिक्षा | ० | ३ |
| हिन्दी प्रथमवाचकम् | ० | ८ |
| भर्तृहरिशतकत्रयं मूलम् | ० | ८ |
| विक्रमार्कचरित्रम् | ० | १० |
| संस्कृतान्ध्रवर्णबोधिनी, पत्रफलका | ० | २ |
| श्रीलक्ष्मीनारायणहृदय | ० | ३ |
| ब्रह्मसूत्राणि, मूलम् | ० | ३ |

॥ नामावलीसहितानि ॥

| | | |
|---|---|---|
| विष्णुसहस्रनामस्तोत्रम् | ० | ४ |
| ललितासहस्रनामस्तोत्रम् | ० | ६ |
| लक्ष्मीसहस्रनामस्तोत्रम् | ० | ४ |
| सुब्रह्मण्यसहस्रनामस्तोत्रं | ० | ८ |
| शिवसहस्रनामस्तोत्रम् | ० | ४ |
| वेङ्कटेशस्तोत्रम् | ० | ४ |
| अन्नपूर्णासहस्रनामस्तोत्रं | ० | ४ |
| आंजनेयसहस्रनामस्तोत्रं | ० | ४ |
| गणपतिसहस्रनामस्तोत्रं | ० | ४ |

वाविल्ल. रामस्वामिशास्त्रिलु अण्ड् सन्स्,
२९२, एस्प्लनेड् चेन्नपुरी.

# YOUR LIFE-READING.

---

For one year in monthly details, Rs 2 The same for businessmen in weekly predictions for one year Rs 8 General whole life-reading containing the results of every coming dasas and bhukthis, Rs 5 Whole life-reading in yearly future predictions, Rs 8 Particular good and bad days for one year for business undertakings, Rs 10 Data required —True copy of horoscope in any language or year month, day, place and hour of birth either according to Hindu or Western system

**PLEASE READ THE FOLLOWING FEW APPRECIATIONS —**

EXTRACT —**Dr Radhakumud Mookerji, M A, Ph D, University Professor, Lucknow, writes** — Congratulate you on the accuracy with which you have calculated the events of my last year s life I am bringing your talents to the notice of some of my influential friends

**Lakshman Hanumanth Prabhu, Esq, B A, L L B, Vakil, Honnavar, (N K) writes** —I have great pleasure to recommend Mr B R Sreenivasaiya to the enlightened public as a trained and considerably accurate astrologer I consulted him taking thorough care to conceal my education and vocation But when I heard from him through post he could precisely give my vocation as well as education much to my amazement He gives reasons for every conclusion he arrives at

**Ananda Narain Sapru, Esq Balliol College, Oxford, writes** —I consulted you in April 1922, and you sent me an annual reading which was very satisfactory

**Shah Sarabhai Hathisingh, Esq Cotton Merchant, Ahmedabad, writes** — Glad to freely admit your esteemed abilities in Astrology Your weekly predictions and calculations have been confirmed

*Apply* —

**B R SREENIVASAIYA,**

**Dewan's Road, Mysore.**

# ಅಘನಿರ್ಣಯಃ

ಆಸ್ಥಾನವಿದ್ವಾನ್ ಚಾಮರಾಜನಗರದ ಸಿದ್ಧಾಂತಿ ತಮ್ಮಯ್ಯಶಾಸ್ತ್ರಿಗಳಿಂದ
ರಚಿತವಾದುದು

ಇದರಲ್ಲಿ ಬ್ರಾಹ್ಮಣಾದಿ ವರ್ಣದವರಿಗೂ, ಬ್ರಹ್ಮಚರ್ಯಾದ್ಯಾಶ್ರಮಸ್ಥರಿಗೂ, ಶಾಸ್ತ್ರ, ಸಂಪ್ರದಾಯಗಳಿಗನುಸಾರವಾಗಿ ಸಂಭವಿಸತಕ್ಕ ಆಶೌಚಗಳ ಭೇದಗಳು ಉಚಿತವಾದ ಸಂಸ್ಕೃತ ವಾಕ್ಯಗಳಿಂದ ಸಪ್ರಮಾಣವಾಗಿ ವಿವರಿಸಲ್ಪಟ್ಟಿರುವುದಲ್ಲದ, ಸಂಸ್ಕೃತಭಾಷಾ ಪರಿಚಯವಿಲ್ಲದವರಿಗ ಅನುಕೂಲಿಸುವಂತೆ ಕನ್ನಡಭಾಷೆಯಲ್ಲಿ ಟೀಕೆಯೂ ಸಹ ಸೇರಿಸಲ್ಪಟ್ಟಿದೆ ಸರ್ವಜನರಿಗೂ ಉಪಕಾರಕವೂ, ಆವಶ್ಯಕವೂ ಆಗಿರತಕ್ಕ ಈ ಗ್ರಂಥವು ಸ್ಮೃತಿ ಸಂಪ್ರದಾಯಗಳಿಗೆ ವಿರೋಧವಿಲ್ಲದಂತೆ ಚನ್ನಾಗಿ ಬರೆಯಲ್ಪಟ್ಟಿದೆಯೆಂದು ಪಂಡಿತೋತ್ತಮರಿಂದ ಅನೇಕ ಪ್ರಶಸ್ತಿಪತ್ರಗಳು ಬಂದಿವೆ

ಪುಸ್ತಕ ೧ಕ್ಕೆ ಕ್ರಯ—ರೂ ೧-೮-೦ ಆರುಪುಸ್ತಕಗಳವರೆಗೆ ತರಿಸಿಕೊಳ್ಳುವವರಿಗೆ ಪುಸ್ತಕ ೧ಕ್ಕೆ ೨ ಆಣೆಯಂತಲೂ, ೧೨ ರವರೆಗ ತರಿಸಿಕೊಳ್ಳುವವರಿಗೆ ೩ ಆಣೆಯಂತಲೂ, ಅದಕ್ಕ ಮೇಲ್ಪಟ್ಟು ೪ ಆಣೆಯಂತೆಯೂ ಡಿಸ್ಕೌಂಟು ಕೊಡಲ್ಪಡುತ್ತದೆ

ಶ್ರೀರಾಮಾವತಾರಕಾಲಪ್ರಕಾಶಿಕಾ— ರಾಮಾಯಣ ಸಂಬಂಧವಾದ ಅನೇಕ ಅಪೂರ್ವವಾದ ವಿಷಯಗಳಿವೆ ಕ್ರಯ ೧ಕ್ಕ ೦—೨—೦ ೫ಕ್ಕೆ ೧ ಇನಾಮು (ಇವೆಲ್ಲಕ್ಕೂ ಟಪಾಲು ಖರ್ಚು ಬೇರೆ)

ದೊರೆಯುವಸ್ಥಳ—

ಆಸ್ಥಾನವಿದ್ವಾನ್ ಸಿದ್ಧಾನ್ತಿ ತಮ್ಮಯ್ಯ ಶಾಸ್ತ್ರೀ,
ಅಧ್ಯಕ್ಷ, ಸಂ ಪಾಠಶಾಲಾ, ಚಾಮರಾಜನಗರ

---

# ವಿಶೇಷ ಸೂಚನಾ

1 ಮಹಾಪಾಠಶಾಲೆಯ ಪಂಚಾಶತ್ಸಂವತ್ಸರ ಮಹೋತ್ಸವದ ಜ್ಞಾಪಕಾರ್ಥವಾದ ಸಂಚಿಕೆಯು ಪ್ರತ್ಯೇಕ ವಿಕರಿಗೆ ಸಿದ್ಧವಾಗಿದೆ ಸುಂದರವಾದ ಐದು ಭಾವಚಿತ್ರಗಳಿಂದಲಂಕೃತವಾಗಿ ಉತ್ತಮವಾದ ಕಾಗದದಲ್ಲಿ ಮುದ್ರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಉದ್ದಾಮ ಪಂಡಿತರಿಂದ ರಚಿತಗಳಾದ ಉಪನ್ಯಾಸಗಳಿಂದ ಭರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಸರ್ವರೂ ಗ್ರಹಿಸತಕ್ಕುದಾಗಿದೆ ಕೆಲವು ಪ್ರತಿಗಳು ಮಾತ್ರ ಉಳಿದಿರುವುದರಿಂದ ಇಷ್ಟವುಳ್ಳವರು ಶೀಘ್ರದಲ್ಲಿಯೇ ಕೆಳಗಿನ ವಿಳಾಸಕ್ಕೆ ಬರೆದು ಪಡೆಯಬಹುದು ಬೆಲೆ ಎಂಟಾಣೆ, ಅಂಚೆ ವೆಚ್ಚ ಎರಡಾಣೆ

2 ಇದುವರೆಗೂ ನಮ್ಮ ಪತ್ರಿಕೆಗೆ ಚಂದಾದಾರರಾಗುವುದರ ಮೂಲಕ ಪ್ರೋತ್ಸಾಹಕೊಟ್ಟ ಮಹನೀಯರಿಗೆ ಬಹಳ ಕೃತಜ್ಞರಾಗಿದ್ದೇವೆ ಮುಂದೆಯೂ ಹೀಗೆಯೇ ಸಹಾಯಮಾಡಿ, ಕ್ಷೀಣದಶೆಗೆ ಬರುತ್ತಿರುವ ಗೀರ್ವಾಣ ವಿದ್ಯೆಯನ್ನು ಕೈಲಾದಷ್ಟು ಉದ್ಧಾರಮಾಡಬೇಕಾಗಿ ಪ್ರಾರ್ಥನೆ

ಮುಂದಿನ ಅಂದರೆ ಏಪ್ರಿಲ್ ಸಂಚಿಕೆಯನ್ನು ವಿ ಪಿ ಮೂಲಕ ಕಳುಹಿಸಲಾಗುತ್ತೆ, ಆದರೆ ಅದಕ್ಕೆ ಮುಂಚೆಯೇ ಕೆಳಗೆ ಕಂಡಂತೆ ಚಂದಾ ಮೊಬಲಗನ್ನು ಮನಿಯಾರ್ಡರು ಮೂಲಕ ರವಾನಿಸಿದರೆ ಚಂದಾದಾರರಿಗೆ ಸ್ವಲ್ಪಮಟ್ಟಿಗೆ (ಎರಡಾಣೆ) ಉಳಿತಾಯವಾಗುವುದೆಂದು ಸೂಚನೆ

| | | | | |
|---|---|---|---|---|
| ಚಂದಾ—ಮೈಸೂರು ದೇಶದೊಳಗೆ | .. | 1 | 8 | 0 |
| ,, ,, ಹೊರಗೆ | | 1 | 10 | 0 |
| ,, ಸೀಮೆಯಲ್ಲಿ | . | 3 ಷಿಲಿಂಗ್ | | |

ಚಕ್ರವರ್ತಿ ರಾಮಾನುಜಯ್ಯಂಗಾರ್ಯ,
ಅಧ್ಯಕ್ಷ,
ಸಂಸ್ಕೃತ ಮಹಾಪಾಠಶಾಲಾ, ಮೈಸೂರು

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिकायाः
विनिमयविषयीभूताः एताः पत्रिकाः.

---

१ भंडारकर् रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना.
२ जर्नल् आफ् ओरियंटल् रिसर्च्, मद्रासु
३ प्रबुद्धकर्णाटक, बेंगळूरु
४ मिथिक् सोसैटि जर्नल्, बेंगळूरु
५ यूनिवार्सिटि यूनियन् म्याग्सीन्, मैसूरु
६ एम् टि वि आर्ट्स्कालेजुम्याग्जीयन्, सूरत्
७ ओरियंटल् कालेजु म्याग्सीन्, लाहोर्
८ सद्बोधचन्द्रिके, आनन्दवन
९ श्री शारदा, शृंगेरि.
१० कादम्बरीसंग्रह, चामराजनगर.
११ सनातनधर्मसंजीविनी, मैसूरु

---

# सूचना.

"मानमेयरहस्यश्लोकवार्तिकम्"

इति नाम कश्चिन्महाप्रबन्ध आनुष्टुभश्लोकरूपेण संगृहीतः सर्वसिद्धान्तसारसंग्रहरूप परस्सहस्रविषयविभक्तः एतत्पत्रिका-संपादकेन प्रणीत. मुद्रितः प्रकाशितश्चास्ति। मूल्यमस्य (6) षट् रूपकाणि प्रापणभृति पृथगेव

उपलब्धिस्थानं—पत्रिकासंपादकः

## ಶ್ರೀ ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ (ಮಾಸಪತ್ರಿಕೆ).

ಈ ಪತ್ರಿಕೆಯು ಪ್ರಾರಂಭವಾಗಿ ಒಂಭತ್ತು ವರ್ಷಗಳಾದುವು. ಇದರಲ್ಲಿ ಪ್ರಕಟವಾಗತಕ್ಕ ವಿಷಯಗಳು ಅತ್ಯುತ್ಕೃಷ್ಟವಾದುವು ಸರ್ವರಿಗೂ ತಿಳಿಯುವಂತೆ ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಅನೇಕ ಪಂಡಿತರುಗಳಿಂದ ವಿಷಯಗಳು ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯಂತೆ ನಮ್ಮಲ್ಲಿ ಮತಪ್ರಕಾಶಕವಾದುದು ಮತ್ತಾವುದೂ ಇರುವುದಿಲ್ಲ ಇದರಲ್ಲಿ ಮಧ್ವಮತಕ್ಕೆ ಸಮ್ಬಂಧಿಸಿದ ವಿಷಯಗಳಲ್ಲದೆ, ಇತರ ಮತಗಳ ಪ್ರಮೇಯಗಳೂ, ನೀತಿ, ಧರ್ಮ, ಪುರಾಣೇತಿಹಾಸಗಳಲ್ಲಿ ಕಂಡುಬರುವ ಅನೇಕ ವಿಷಯಗಳೂ ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯನ್ನು ಆದರಿಸುವಂತೆ ಸರ್ವರೂ ಪ್ರಾರ್ಥಿಸಲ್ಪಡುತ್ತಾರೆ

ಇದರ ವಾರ್ಷಿಕಚಂದಾ ರೂ. ೨-೪-೦ (ಟಪ್ಪಾಲು ಸಮೇತ) ಪೋಷಕರು ೧ನೇ ತರಗತಿ ರೂ ೧೦-೦-೦ ೨ನೇ ತರಗತಿ ರೂ ೫-೦-೦ ಹಿಂದಿನ ಸಂಪುಟಗಳನ್ನಪೇಕ್ಷಿಸುವವರು ಬರೆದು ತರಿಸಿಕೊಳ್ಳಬಹುದು.

ಕೆ. ವ್ಯಾಸಾಚಾರ್ಯ, ಬಿ ಎ,

ಕಾರ್ಯದರ್ಶಿ, ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ ಸಭಾ, ಮೈಸೂರು.

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

## विषयसूचना

---





## विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम—संस्कृतविद्याभिमानिन पुरुषप्रवराः यं कंचन विषयमाधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकर अचर्चितपूर्वं कालदेशदशानुगुण प्रपञ्चोपकारकरं धर्माद्यविरुद्धं 'जीर्णमङ्गे सुभाषितम्'' इति निर्वेदस्य वीरा वाचैव केवलम्'' इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यास विलिख्य यदि प्रेषयेयुर्महान्त , तेभ्यो महद्र्घ्य समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यास पारयाम प्रकाशयतुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवनन त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य

---

## मूल्यप्रकारः

१ अस्या पत्रिकाया वार्षिक आग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम् (भारतमण्डले)
२. विद्यार्थिना पुन एकरूप्यकम्
३ विभिन्नदेशे सपादरूप्यद्वयम् (3 s.) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यंगार्,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः मैसूरु.

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रयं प्रकटीक्रियमाणा.



कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समा·

(ईशोपनिषत्)

सपुट-३] जुलै १९२७ [सञ्चिका-३

## कविकाव्यविचारः

नामनामं हरेर्वाह छन्दोदेह शुभावहम् ।
विचारः कविकाव्याना क्रियते विदुषां मुदे ॥
कवय. कति वा नासन् कृतय. कति नाभवन् ।
तेषां संख्या तु साकल्यान्निर्देष्टुं केन शक्यते ॥
अपूर्णाश्च सुपूर्णाश्च कवय· कृतयस्तथा ।
उत्पद्यन्ते विलीयन्ते बुद्बुदा इव सागरे ॥
कथंचिदपि लब्धेषु प्रबन्धेषु कवीश्वरै. ।
निस्पृहैर्निजनामापि न कुत्रापि निबध्यते ॥
निर्दिष्टेऽप्यथवा नाम्नि केनचित् कुत्रचित्कृतौ ।
देश· कालोऽथ वा जातिर्न कुत्रापि प्रदर्श्यते ॥
एवं सति कथं तेषां कालदेशादिनिर्णय ।
बृहस्पतिसमेनापि यथावत्कर्तुमिष्यते ॥
बन्द्यास्ते हि महात्मानः ख्यातिलाभपराङ्मुखा· ।

लोकोपकारदृष्ट्यैव निबबन्धु कृतीस्सदा ॥
तादृशाना सुविदुषा कालदेशादिसूचने ।
पाश्चात्यविद्यासघर्षाद्विचार॰ प्रस्तुतोऽधुना ॥
पाश्चात्यविद्यानिपुणा विमर्शकधुरन्धरा ।
शासनानि नृपालाना मुद्राश्चालोक्य सर्वत॰ ॥
भाषाशैलीश्च सर्वत्र समालोच्य पुन पुनः ।
शाखाचन्द्रनयेनाद्य कुर्वते कालनिर्णयम् ॥
स च तैः क्रियते क्रिस्तात् पूर्वं पश्चादिति द्विधा ।
अस्माभिरपि तेनैव पथा गन्तव्यताऽभवत् ॥
यद्यप्यासन् पुरा भूपः शकमार्गप्रवर्तका ।
तथाप्याङ्गलप्रभुत्वेऽद्य क्रिस्तकालः प्रगृह्यते ॥
सुखबोधाय सर्वेषामाङ्गलमार्गानुयायिनाम् ।
अस्माभिरपि क्रिस्तस्य शक एव प्रगृह्यते ॥
अत्र ये भारते जाताः क्रिस्तात्पश्चात्कवीश्वरा॰ ।
तेषां विचार प्रथम सप्रमाणं वितन्यते ॥
पश्चात्तत्पूर्वजातानां कवीनां कालनिर्णय॰ ।
आङ्गलानां भारतीयानां मतान्यालोच्य तन्यते ॥

**सातवाहन**

[1] प्रतिष्ठानपुरे भूप॰ सातवाहन नामक॰ ।
प्रथमे क्रिस्तशतके बभूवेति विमर्शका ॥

[1] तच्चाधुना दक्षिणापथे गोदावरीतीरे पैठणनाम्ना प्रसिद्धमस्ति ।

[1] भूपश्चाय महाविद्वान् दीपकर्णितनूभव. ।
गुणाढ्यशर्ववर्मादिकवीनामाश्रयोऽभवत् ॥

[2] जघान मलयवत्याख्या कर्तर्या शातवाहन ।
इति वात्स्यायनः प्राह कामसूत्रे महामतिः ॥

बाणस्तु हर्षचरिते सातवाहनभूपतिम् ।
कविप्रशसावसरे तुष्टावेत्थ महाकविम् ॥

अविनाशिनमग्राम्यमकरोत्सातवाहन ।
विशुद्धजातिभि कोश रत्नैरिव सुभाषितै ॥

[3] शतानन्दसुत. श्रीमानभिनन्दकवीश्वरः ।
श्रीरामचरिताभिख्ये स्मरत्येव महाकविम् ॥

नमः श्रीहारवर्षाय येन हालादनन्तरम् ।
स्वकोशः कविकोशानामाविर्भावाय सभृतः ॥

[1] हालेनोत्तमभूभुजा कविवृषः श्रीपालितो लालित
ख्यातिं कामपि कालिदासकवयो नीताः शकारातिना ।
श्रीहर्षो विततार गद्यकवये बाणाय वाणीफल
सद्यः सत्क्रिययाऽभिनन्दमपि च श्रीहारवर्षोऽग्रहीत् ॥

---

[1] दृश्यतामिय कथा कथासरित्सागरस्य षष्ठे तरङ्गे ।

[2] कर्तर्या कुन्तलश्शातकर्णि. शातवाहनो महादेवी मलयवतीं [जघान] । वात्स्यायनकामसूत्रे द्वादशाध्यायान्ते ॥

[3] शतानन्दसुतमहाकविश्रीमदभिनन्दप्रणीतरामचरितास्य काव्यस्य सप्तमसर्गान्ते पञ्चदशसर्गान्ते दृश्यते पद्यमिदम् ॥

[4] श्रीमदाभिनन्दविरचिते रामचरिते द्वात्रिंशत्सर्गसमाप्तौ श्लोकोऽयं परिदृश्यते ॥

पालिताख्येन विदुषा प्रन्थार्थे धनलिप्सया ।
गाथासप्तशती तेन इत्यप्यास्ति प्रथा क्वचित् ॥
कुंतलाधिपतिस्सोऽयं सातवाहनभूमिपः ।
घूर्जरेऽपि प्रभुश्चासीदिति वक्ति कथा[1]बुधौ ॥
[2] राजार्हरत्ननिचयैरथ शर्ववर्मा
  तेनार्चितो गुरुरिति प्रणतेन राज्ञा ।
स्वामीकृतश्च विषये भरुकच्छनाम्नि
  कूलोपकण्ठविनिवेशिनि नर्मदायाः ॥
जज्ञे शालमहीपालः प्रतिष्ठानपुरे पुरा ।
इति हैमनिघटौ च तट्टीकाया च दृश्यते ॥
सूक्तिमुक्तावलीग्रन्थे राजशेखरनिर्मिते ।
सातवाहनभूपस्य प्रशस्तिः परिदृश्यते ॥
जगत्यां ग्रथिता गाथास्सातवाहनभूभुजा ।
व्यधुर्धूर्तेस्तु विस्तारमहो! चित्रपरंपरा ॥
[3] भंडारकबुधो मत्स्यविष्णुवाय्वादिनामसु ।
पुराणेष्वपि हालस्य नामास्तीति न्यदर्शयत् ॥
शालो हालनृपेऽपीति [4] काडशेषेऽपि दृश्यते ।
सातवाहनशब्दार्थं [5] सोमदेवोऽब्रवीदिति ॥

---

[1] कथासरित्सागरे सोमदेवः--

[2] कथासरित्सागरषष्ठतरङ्गसमाप्तिस्थमिदं पद्यम् ॥

[3] भांडारकरोपाह्वरामकृष्णशर्मभिर्विरचिते प्राचीनेतिहासनाम्नि पुस्तके २५ पृष्टे विलोकनीयम् ॥

[4] अमरत्रिकांडशेषे दृश्यताम् ।

[5] कथासरित्सागरे षष्ठतरंगे दृश्यताम् ।

सातेन [यक्षेण] यस्मादूढोऽभूत्तस्मात्त सातवाहनम् ॥
नाम्ना चकार कालेन राज्ये चैन न्यवेशयत् ॥
उक्तप्रमाणवाहुल्यात्सातवाहननामकः ।
प्रथमे शतके राजा बभूवेति विदां मतम् ॥
हालश्शालश्शातवाहश्शालिवाहन इत्यपि ।
एकस्यैव नृपालस्य पर्याया इति निर्णयः ॥
शालिवाहन इत्येतत्सातवाहनभूपते ।
नामान्तरमिति प्राह [1] गङ्गाधरबुधाग्रणी ॥
अयमेव शकारातिरिति केचन मन्वते ।
अन्ये विमर्शधौरेया अन्यमेव प्रचक्षते ॥
पञ्चमे शतके वक्ति स्वय पाल्नरेश्वर ।
शालिवाहननामापि स्वस्यासीदिति तन्नत ॥
आसीद्राजा च विद्वांश्च सातवाहन इत्ययम् ।
सर्वैरप्यनुमन्तव्य प्रमाणै. प्राक्प्रदर्शितै ॥
अनेनैव कृता श्लाघ्या गाथासप्तशती वरा ।
इत्यत्र नास्ति सदेह प्रमाणानामनुग्रहात् ॥
आवण्णाइं कुलाइं दो विअ जाणंति उण्णइ णेउम् ।
गोरीअ हिअअदइओ अहवा सालाहणणरिंदो ॥ ५–६७
छा ॥ आपन्नानि कुलानि द्वावेव जानीत उन्नति नेतुम् ।
गौर्या हृदयदयितोऽथवा शालिवाहननरेन्द्रः ॥
[2] आद्यन्तयोस्तुग्रन्थस्य सातवाहनभूपतेः ।
कृतिरित्येव लिखिता सर्वत्र परिदृश्यते ॥

---

[1] गाथासप्तशत्याः टीकाकार. ।

[2] आदौ—

आकर पद्यरत्नाना प्राकृतानामियं कृति ।
रसोऽत्र मुख्य· शृङ्गार शैली मधुरकोमला ॥

अर्थपुष्टिः समुत्कृष्टा भावस्त्वत्यन्तसुन्दर ।
तस्माल्लाक्षणिका [1] सर्वे पद्यान्यस्मादुपाददु ॥

अस्माभिरधुना किंचिद्दिदृक्षायत्तचेतसाम् ।
पुर· कान्यपि पद्यानि स्थाप्यन्ते हालकोशत· ॥

अमिय पाउयकव्व पडिउ सोउ अ जे ण आणति ।
कामस्स तत्ततर्ति कुणति ते कह ण लज्जति ॥

छा ॥ अमृत प्राकृतकाव्य पठितु श्रोतु च ये न जानति ।
कामस्य तत्त्वचिता कुर्वते कथ न लज्जन्ते ॥

---

सत्तसताइ कइवच्छळेण कोडीअ मज्झआरम्मि ।
हाळेण विरइआइ सालकाराणं गाहाणम् ॥

छा ॥ सप्तशतानि कविवत्सलेन कोटेर्मध्ये ।
हालेन विरचितानि सालकाराणा गाथानाम् ॥ १–३

अन्ते—

श्रीमत्कुंतलजनपदेश्वर —प्रतिष्ठानपत्तनाधीश — कालापप्रवर्तक शर्ववर्मधीसख–मलयवत्युपदेशपण्डितीभूत–शतकर्णोपनामक–द्वीपिकर्णात्मज—मलयवनीप्राणप्रिय –त्यक्तभाषात्रय–स्वीकृतपैशाचिकपण्डितराज-गुणाढ्य–निर्मितभस्मीभवद्बृहत्कथावशिष्टसप्तमाशावलोकन–प्राकृतादिवाक्पंचकप्रीत कविवत्सल–हालाद्युपनामक —श्रीसातवाहननरेन्द्रनिर्मिता विविधान्योक्तिमयप्राकृतगीर्गुम्फिता शुचिरसप्रधाना काव्योत्तमा सप्तशत्यवसानमगात् इति ॥

[1] मम्मटप्रभृतयो लाक्षणिका· (आलकारिका·)

[1]अमअमअ गअणसेहर रअणीमुहतिलअ चद दे छिवसु ।
छित्तो जेहिं पिअअमो ममं पि तेहिं विअ करेहिम् ॥

छा ॥ अमृतमय' गगनशेखर' रजनीमुखातिलक' चद्र' हे' स्पृश ।
स्पृष्टो यैः प्रियतमो मामपि तैरेव करैः ॥ १ —१६

[2]चत्तरघरिणी पिअदसणा अ तरुणी पउत्थपइआ अ ।
असईसपाज्जिआ दुगआ अ णहु ग्वडिअं सीलम् ॥

छा ॥ चत्वरगृहिणी प्रियदर्शना च तरुणी प्रोषितपतिका च ।
असतीप्रतिवेशिनी दुर्गता च न खलु खडितं शीलम् ॥१–३६

[3]थोअ पि ण णीसरई मज्झण्णे उह सरीरतललुक्का ।
आअवभएण छाहीवि पाहिअ ता किं ण वीसमसि ॥

छा ॥ स्तोकमपि न नि.सरति मध्याह्ने पश्य शरीरतललीना ।
आतपभयेन छायाऽपि पथिक तत्किं न विश्राम्यसि ॥

---

[1]प्रोषितभर्तृकाया. कस्याश्चिच्चन्द्र प्रत्युक्तिः—अत्र अमृतमयेत्यनेन जगज्जीवनहेतुत्व गगनशेखरेत्यनेन अखिललोकलोचनानन्द कारित्वं, रजनीमुखातिलकेत्यनेन अबलाजनपक्षपातित्वं, चन्द्रेत्यनेन आह्लादकत्वं च व्यज्यते । त्वमेवविधोऽपि मां निर्दय दहासि । मत्कान्त पुनरमृतशिशिरैः करै. स्पृशतीत्यतोऽद्यापि नायातीति—भाव ॥

[2]सता सत्यपि विनाशकारणे विनाशो न भवतीत्यसती काचित्स्वदोषप्रच्छादनार्थमाह—

चत्वरे राजमार्गे गृहं यस्याः । असत्या.–कुलटायाः प्रतिवेशिनी । अत्र चत्वरगृहिणीत्वादिशीलखडनकारणस्य सत्त्वेऽपि तदभावः प्रदर्शितः ॥

[3]अचेतना छायाऽप्यातपभयेन बहिर्न निष्क्रामति किंपुनश्चेतनः?

[1] पोट्टपडिएहि दु:ख अच्छिज्जइ उणएहिं होऊण ।
इअ चिंतआणं मण्णे थणाण कसण मुह जाअम् ॥
छा ॥ उदरपतिताभ्यां दुःख स्थीयेते उन्नताभ्या भूत्वा ।
इति चिंतयतोर्मन्ये स्तनयो कृष्ण मुख जातम् ॥ १—८३.
[2] वक्कं को पुलइज्जउ कस्स कहिज्यउ सुह व दुःख वा ।
केण सम व हसिज्यउ पामरपउरे हयग्गामे ॥
छा ॥ वक्र कः प्रलोक्यतां कस्य कथ्यता सुख वा दु:ख वा ।
केन समं वा हस्यतां पामरप्रचुरे हतग्रामे ॥ २—६४ ॥
[3] पउरजुवाणो गामो महुमासो जोअण पई ठेरो ।
जुण्णसुरा साहीणा असई मा होउ किं मरउ ॥
छा ॥ प्रचुरयुवा ग्रामो मधुमासो यौवन पति स्थविरः ।
जीर्णसुरा स्वाधीना असती मा भवतु किं म्रियताम् ॥ २-९७
[4] त मित्तं काअव्व ज किर वसणम्मि देसआलम्मि ।
आलिहिअभित्तिवाउल्लअ व ण परम्मुहं ठाइ ॥
छा ॥ तन्मित्र कर्तव्यं यत्किल व्यसने देशकालेषु ।
आलिखितभित्तिपुत्तलकमिव न पराङ्मुखं तिष्ठति ॥ ३-१७

---

अतो मध्याह्ने कोपिऽबहिर्न निर्याति । तद्विविक्ते निरपाये मध्याह्ने सुखमनुभवेति कापि पथिकमाह ॥

[1] लोकेऽपि प्रथम प्रणयबहुमानादिना उन्नतो भूत्वा दैववशा-द्दुर्गतस्सन् उदरभरणव्यग्रो यदा भवति तदा तस्य मुखं श्यामं भवतीति ध्वनि. । गर्भिणीं प्रत्युक्तिरियम् ॥

[2] इंगितज्ञाऽभावेन कटाक्षदेर्निष्फलत्वात्काचिद्विदग्धा ग्रामानिन्दां करोति ॥

[3] शीलखण्डनविलक्षायाः कुलजायाश्चित्तसमाधानार्थं काचिदाह ॥

[4] दृढसौहृदमिच्छन्त्याः कस्याश्चन नायिकाया इयमुक्तिः ।

[1] पइपुरओ व्विअ णिज्जइ विच्छुअदट्ठेति जारवेज्जघरम् ।
णिउणसहीकरधारिअभुअजुअलन्दोलिणी बाला ॥
छा॥ पतिपुरत एव नीयते वृश्चिकदष्टेति जारवैद्यगृहम् ।
निपुणसखीकरधृतभुजयुगलान्दोलनशीला बाला ॥ ३–३७ ॥
[2] जिविअं असासअं विअ ण णिवत्तइ जोव्वणं अतिक्कतम् ।
दिअहा दिअहेहि समा ण होंति कि णिट्ठुरो लोओ ॥
छा ॥ जीवितमशाश्वतमेव न निवर्तते यौवनमतिक्रान्तम् ।
दिवसा दिवसै. समा न भवन्ति कि निष्ठुरो लोक॰ ॥ ३–४७
[3] सुअणो ण कुप्पइ व्विअ अह कुप्पइ विप्पिअं ण चितेइ ।
अह चितइ ण जम्पइ अह जम्पइ लज्जिओ होइ ॥
छा॥ सुजनो न कुप्यत्येव अथ कुप्यति विप्रिय न चिन्तयति ।
अथ चिन्तयति न जल्पति अथ जल्पति लज्जितो भवति ॥३-५०
[4] सो अत्थो जो हत्थे तं मित्त यं णिरतर वसणे ।
त रूअ जत्थ गुणा त विण्णाण जहिं धम्मो ॥
छा॥ सोऽर्थो यो हस्ते तन्मित्रं यन्निरन्तर व्यसने ।
तद्रूपं यत्र गुणास्तद्विज्ञान यत्र धर्मः ॥ ३–५१

---

[1] स्त्रीणा बहुच्छलत्व दर्शयन्ती दूती प्राह—विषजनितमूर्च्छाछलेन—भुजयुगलादोलनशीला । बालेत्यनेन प्रगल्भायास्तु कैतव किं वक्तव्यमिति भाव॰ ॥

[2] प्रणयकुपितयोर्दपत्यो. प्रणयकोपभङ्गार्थं सख्या उक्ति॰—

[3] कृतविप्रिय प्रति प्रतिकूलाचरणप्रवृत्तस्य कस्यचिन्निवारणाय कश्चित्सुजनचरित्र वर्णयति—

[4] कांचिद्रूपगर्वितां निर्गुणां निन्दत्या. स्वगुणोत्कर्षं सूचयन्त्याः कस्याश्चिदियमुक्ति. ॥

[1] विण्णाणगुणमहग्घे पुरिसे वेसत्तण पि रमणिज्जम् ।
जणणिंदिए उण जणे पिअत्तणेणावि लज्जामो ॥
छा ॥ विज्ञानगुणमहार्घे पुरुषे द्वेष्यत्वमपि रमणीयम् ।
जननिन्दिते पुनर्जने प्रियत्वेनापि लज्जामहे ॥ ३-६७ ॥
[2] वाहिव्व वेज्जरहिओ धणरहिओ सुअणमज्झवासो व्व ।
रिउरिद्धिदसणम्मिव दूसहणीओ तुह विओओ ॥
छा ॥ व्याधिरिव वैद्यरहितो धनरहितः स्वजनमध्यवास इव
रिपुऋद्धिदर्शनामिव दुस्सहनीयस्तव वियोगः ॥ ४-६३ ॥
[3] तेण ण मरामि मण्णूहिं पूरिआ अज्ज जेण रे सुहअ ।
तोग्गअमणा मरती मा तुज्झ पुणो वि लग्गिस्सम् ॥
छा ॥ तेन न म्रिये मन्युभिः पूरिताऽद्य येन रे सुभग ।
त्वद्गतमना म्रियमाणा मा तव पुनरपि लगिष्यामि ॥ ४-७५ ॥
[4] वसणम्मि अणुव्विग्गा विहवम्मि अगव्विआ भए धीरा ।
होंति अहिण्णसहावा समेसु विसमेसु सप्पुरिसा ॥
छा ॥ व्यसनेऽनुद्विग्ना विभवेऽगर्विता भये धीरा· ।
भवन्त्यभिन्नस्वभावा· समेषु विषमेषु सत्पुरुषा· ॥ ४-८०

---

[1] विदग्ध प्रति साभिलाषा कापि निर्गुणे स्वभर्तरि वैराग्यं सूचन्त्याह·॥

[2] कापिविदग्धा स्थिरमनुराग सूचयन्ती कमप्याह ॥ प्रियं प्रति कस्याश्चन संदेशोक्तिरियमिति केचित्—

[3] कृतापराधं कान्तं कापि सप्रणयरोषं वक्ति—

त्वद्गतचित्ताया मम मरणमेव युक्तम्, परंतु तव स्मरणाद्यदि मरणं भवति तदा जन्मान्तरेपि त्वमेव मम पति दु खदो भविष्यसीति भीत्या न म्रियेयेति भावः ॥

[4] कोऽपि सहचरस्य गाम्भीर्यशिक्षार्थं सत्पुरुषप्रशंसामाह—

[1] भण को ण रुस्सइ जणो पत्थिज्जतो अएसकालम्मि ।
रतिवायंडा रुअत पिअ वि पुत्त सवइ माआ ॥ ४-१७०
छा ॥ भण को न रुप्यति जन. प्रार्थ्यमानोऽदेशकाले ।
रतिव्यापृता रुदन्त प्रियमपि पुत्र शपते माता ॥
[2] उअअं लहिउण उत्ताणिआणणा होंति के वि सविसेसम् ।
रित्ता णमति सुइर रहट्टघडिआ व्व कापुरिसा ॥
छा ॥ उदक लब्ध्वा उत्तानितानना भवन्ति केऽपि सविशेषम् ।
रिक्ता नमन्ति सुचिर रहट्टघटिका इव कापुरुषा. ॥ ५-९० ॥
[3] मुहपेच्छओ पई से सा वि हु सविसेसदसणुम्मइआ ।
दो वि कअत्था पुहइ अमहिलपुरिस व मण्णन्ति ॥
छा ॥ मुखप्रेक्षकः पतिस्तस्या॰ सापि खलु सविशेषदर्शनोन्मत्ता ।
द्वावपि कृतार्थौ प्रथिवीममहिलापुरुषामिव मन्येते ॥ ५-९८ ॥
[4] हसिएहि उवालम्भा अच्चुवचारेहि खिज्जिअव्वाइं ।
अंसूहि मंडनाइं एसो मग्गो सुमहिळाणम् ॥
छा ॥ हसितैरुपालंभाः अत्युपचारै. खेदितव्यानि ।
अश्रुभिः मंडनानि एष मार्ग सुमहिळानाम् ॥ ६-१६

---

[1] असमये प्रार्थयितारं कमपि कोऽपि शिक्षयन्नाह—

[2] अस्थिरानुराग प्रियमुपालभमानाया. कस्याश्चन नायिकाया उक्तिः । रहट्टः—घटीयत्र—" राटे " इति भाषायां ॥

[3] समानुरागरूपकुलवयसो कयोश्चिद्दंपत्योस्साभिलाषावलोकितान्यवलोक्यासूयन्ती काचिदाह—

[4] कापि सखी शिक्षार्थं कुलवधूवृत्तमाह—हसितैरेव नतु रोदनैः उपचारैर्नतु गृहकृत्यपरित्यागेन, अश्रुभिः नतु वचोभिरिति भावः ।

[1]गेह व वित्तरहिअ णिज्झरकुहर व सलिलसुण्णविअम् ।
गोहणरहिअं गोट्ठ व तीअ वअणं तुह वियोए ॥
छा॥ गृहमिव वित्तरहित निर्झरकुहरमिव सलिलशून्यम् ।
गोधनरहित गोष्ठमिव तस्या वदन तव वियोगे ॥ ७–९
[2]जजं आलिहइ मणो आसावट्टीहि हिअअफलअम्मि ।
तंत बालो व्व विही णिहुअ हसिलाण पम्हुसइ ॥
छा ॥ यद्यदालिखति मनः आशावर्तिकाभिः हृदयफलके ।
तत्तद्बाल इव विधिर्निभृत हसित्वा प्रोञ्छति ॥ ७–५६ ॥
जेजे गुणिणो जेजे अ चाइणो जे विडड्ढविण्णाणा ।
दारिद्द रे विअक्खण ताण तुम साणुराओसि ॥
छा ॥ येये गुणिनो येये च त्यागिनो ये विदग्धविज्ञाना ।
दारिद्र्य रे विचक्षण तेषा त्व सानुरागमसि ॥
[4]धण्णा बहिरा अधा ते चिअ जीअन्ति माणुसे लोए ।
ण सुणंति पिसुणवअणं खलाण ऋद्धिं ण पेक्कति ॥
छा ॥ धन्या बाधिरा अन्धास्त एव जीवन्ति मानुषे लोके ।
न श्रृण्वान्ति पिशुनवचनं खलानामृद्धिं न प्रेक्षन्ते ॥ ७–९६

---

[1]नायिकाया अनुरागातिशय व्यञ्जयन्त्या दूत्या उक्तिः—
न शोभत इति शेषः ॥

[2]अनुरूपनायकालाभेन दूना काचिद्बाला विधिमुपालभते—

[3]गुणिनः प्रायो दरिद्रा भवंतीति प्रतिपादयन् कश्चिद्दारिद्र्यं संबोध्याह ॥

[4]दुर्जनस्य कस्याचिदुपचयं पश्यन्ती कापि सखीसन्निधौ परितपति ॥

स्थालीपुलाकन्यायेन गाधाः काश्चन दर्शिता ।
साकल्येन दिदृक्षा चेत्सप्तशत्येव दृश्यताम् ॥

---

इति सरळकविसूरि विद्याविभूण विद्यावाचस्पति
काव्यविशारद, ज्ञानगुणाकरेत्यादि विरुदा-
ङ्कितस्य महाविदुषश्चक्रवर्तिवात्स्यराज-
गोपालसूरे कृतिषु कविकाव्य-
विचारे प्रथम प्ररोहः

श्री

## व्यवहारतत्त्वम्.

### शमः

विमर्दैरुद्भूतैरपि न परिखिद्यन्ति सुधियो
यतस्तोषस्तूर्णं निरुपम उपादातुमुचितः ।
अमर्षानुद्वेलान् बहुतरतरङ्गावृतपथान्
समूलं निष्कृन्तन् स हि विजयतां सम्प्रति शमः ॥ १ ॥

भ्रमरकः—सखे ! सखेद इव लक्ष्यते भवान् किं नु कारणम् ?

कपिञ्जलकः—भद्र ! निखिलसौख्यविरोधिक्रोधमार्गनिपातितं जगदेवेदं तथा ।

प्रवाहैः परिकृष्टाना अवलम्बव्यपायतः ।
मोमुह्यमानचित्तानां दर्शनं क न खेदयेत् ॥ २ ॥

भ्र—विपुलानन्दपरिकरबृन्दपरिपूर्णे भगवति भूमण्डले नवविविधमतिविभवचन्द्रचन्द्रिकाविलसिते भोगबलविकलान् कतिपयानन्तरेण कः खिद्यतु ?

द्वि—भद्र—अर्थमनर्थं वा परिगणय्यापि भुञ्जानो नैधेत —

शर्करास्वादमत्तेन मक्षिका चेदुपेक्ष्यते ।
साकं प्रविश्य हृदयं विपत्तिं तनुते न किम् ॥ ३ ॥

भ्र—आस्वादयतु अपितु स्मरतु विरोधिनामिति केयमुपभोगाज्ञा ?
कश्चासौ उद्वेगकलुष उपभोगः ?

द्वि—अपायानपनीयैव ह्युपभोगैः प्रहृष्यतु ।
पात्रान्तर्निहितग्रीवः मा पिबत्वमलं पयः ॥ ४ ॥

प्र—सत्यमाह—न हि मधुर मधुरमिति तत्रैव मज्जितव्यम् । यत.-

बलात्प्रवेशितस्कन्धो मार्जार पय आपिबन् ।
बालैरपि प्रहार्यस्सन् न विमुञ्चति सभ्रमान् ॥ ५ ॥

द्वि—न केवलमविमर्शेन विरोधिनोऽपरिगणयत. सक्षोभमात्रम् । अनुभूतमपि सुखमसुख कल्प्येत । अत —

कामं भुनक्तु विषयान् कर्णेहत्य नराश्चिरम् ।
सदा विरोधिवर्गेषु सावधानो विमोदते ॥ ६ ॥

प्र—सत्य सत्य—विरोधिष्वनवहितस्य सिद्धमप्यन्न नावकल्पते । संभृतापि सपत्केवलमुद्वेगाय । सदैव च मक्षुब्ध मानसं न कचिदवतिष्ठते यावन्निष्फलसक्षोभ न परावर्तते ।

क्रोध.

द्वि—अतः परमपि किन्तु कष्टतर यदादेहपात रुजेव परिपीडयति मानसं , तत्रापि क्रोधव्यसनोपहत· आढ्यतरोऽपि सर्वसक्षोभखनिरित्येव परिगणनीयः, क्रोधोऽपि विवादपरिभवम्वस्वाभीष्टसाधनैदम्पर्यसंभवः प्रकुप्यते । येन हि—

गम्भीरवेदीव नरो दुराधर्षतराग्रह ।
न विजानीत सतत स्वान् परानपि दुर्मद. ॥ ७ ॥

प्र—सखे—स्वाभीष्टसाधनायापि कदाचिदवश्य काङ्क्ष्यते क्रोध. ; यः किल शमधनेष्वपि दुर्वादप्रसर. ।

गुणी विश्वश्लाघ्यो विबुधमहितः क्षान्तिनिलयः
गणं यः कीशानां गमयितुमना. पारमुदधेः ।
प्रहृत्यास्त्रैरुग्रैरवशयदकूपारमनघ
रघूणामुत्तंसो न खलु न च स क्रोधवशगः ॥ ८ ॥

द्वि—भद्र—क· खलु क्रोधं तावदपकर्षेत्—

विना क्रोधं मनुष्याणां वृत्तिश्चेदुपदिश्यते ।
विना प्रश्वासनिश्वासौ वृत्तिरप्युपदिश्यताम् ॥ ९ ॥

न खलु क्रोध इत्येव परिहेयता शम इत्येव वा संग्राह्यता ।
क्रोधेनातितरेण हि सुयोधनोऽनीनशत्कुलं प्रायः ।
केवलमक्रोधेन च विवास्य दयितां रघूद्वहोऽखिद्यत् ॥ १० ॥

किंतु —
क्रोधेन फलमित्येव न सदैव प्रकुप्यतु ।
क्रोधे न फलमित्येव न च सर्वत्र शाम्यतु ॥ ११ ॥

प्र—सखे ! किमिदानीं विवक्षितम्—
क्रोधं च तदभावं च निन्दता सनिदर्शनम् ।
न प्रेर्यन्ते न वार्यन्ते व्यवहारेषु मानवाः ॥ १२ ॥

द्वि—किमिहानुपपन्नम्—
अत्यारमदनीयं च प्राहौदनमपि श्रुतिः ।
असंसेवातिसेवाभ्यां क्षतिमत्र विदुर्बुधाः ॥ १३ ॥

प्र—सखे फल्ग्वपि दुरवगाहमिवेदं प्रभाषते भवान् । यतः—
न पुंसां स्वातन्त्र्यं क्वचिदिह फलाय प्रभवति
प्रजावर्गे वर्गेष्वपि खलु तिरश्चां विधिबलात् ।
यथा सूत्रप्रोतं चलति जगदेतद्बहुविधं
वृथैव व्यापाराः जगति मनुजानां सुविपुलाः ॥ १४ ॥

द्वि—ततः किं—

प्र—इदं ततः—न पुंसां इत्यादि पुनः पठति ।

द्वि—भद्र—ततः किमुपदेश्यमवशिष्यते इति पृच्छामि । यतः—
किं नोच्छ्वसिति मर्त्योऽयं दैवायत्तं जगद्विदन् ।
सुबह्वेवाचरन् बुद्ध्वा दैवे स्वाम्यं कियद्वदेत् ॥ १५ ॥

प्र—तथा तथा प्रवाहेण नियतेर्मानुषो भुवि ।
कर्तृतामात्मनोऽध्यस्येत् न तु सास्ति तथाविधा ॥ १६ ॥

द्वि—भद्र ! चित्रमिदमम्व्वेवाविजानतोऽकूपारविज्ञानमनुकरोति । यतः—
पुरुषे चेष्टमानेऽपि परितोदिक्क्रमेव हि ।
कर्तृता दुर्ग्रहा यस्य स विवेद विधेर्बलम् ॥ १७ ॥

प्र—सखे—सत्यमाह भवान् । किंतु—
युक्त्या विमृशतामेव निर्णयो नोपपद्यते ।
इति कृत्वा मतिरिय व्यवस्थाप्येत मानुषैः ॥ १८

द्वि—भद्र–बुद्धिर्न व्यवतिष्ठत इत्येतावता क एष स्वैरालाप ।

प्र—प्राज्ञैः पुनः समुचिते पथि व्यवस्था गमिता व्यवतिष्ठते इति सख्युरभिमान । अथ वा किं न एतेन 'सर्वथा नेद दूषण भूषणं वा भवितु मर्हति, यत् क्रुध्यति शाम्यतीति ।

द्वि—समुचिते तु पथि तथैव विद्म वयमपि ।

प्र—कस्तर्हि सख्युस्समारम्भः ?

द्वि—अयथायथ न युज्यते तयोः प्रयोगः, यः किल निरन्तरविवाद-परेषु जागर्ति इति ।

प्राड्विवाक

प्र—भद्र धर्मवर्मलुण्टाकप्राड्विवाकगणकदर्थिते जगति धर्मैकपरायण मपि हृदय परिक्षुभ्यते, यतः—
न सत्य ससाध्य नचभवति धर्मोऽवनपद
दया वा नो भूतेष्वघभयमपास्त धनतृषा ।
स्वय स्वैरं वादे पटुतरमनीषाकपटिनः
बहुन्यायोद्घोषान् विदधति धनाशैकविवशाः ॥ १९ ॥

द्वि—सखे—

चिराभ्यस्तन्याया: परिचितमुनिर्णीतिसृतय

व्ययायासग्राह्यं समितिषु परीक्षाक्रमभवम् ।

बहुश्रद्धास्पर्धाभरविवशचित्ता इह हि ये

लभन्ते निर्णेतु. पदमहह तान् निन्दसि कथम् ॥ २० ॥

प्र—विना धनायां विविधहृदयक्षोभदु खेषु विवादनिर्णयपथेपु व्यपनीयापि स्वकार्य तत्तत्कुटुम्बकलहोपशमनमिच्छन्तः प्रवर्तन्ते नरा इति कस्येद विश्वास्यम् ? ।

द्वि—सखे—स्वय स्वाभीष्टसाधनव्यग्रैर्वादिभिरुपाश्रीयमाणा वितथवाद मूलविख्यापनपरिमुष्टितसत्यमार्गैस्तैरुदित सावधानमाकलय्यैव बहुक्षोभभरसहनग्लाना. वादान् परिरक्षितुमीहन्ते वादका', तत् क एष तेष्वाग्रहः ? किंच—

विशुद्धेऽखण्डोर्वीतलदमनलीले नृपकुले

विलीनेऽर्वाग्राष्ट्राक्रमणसरणि न्यायतरलाम् ।

चरित्रेष्याकर्ण्य क्षितिपतिगणक्षोभणकरीं

जनस्सर्वः प्रायश्श्रयति सृतिमेतां धनकृते ॥ २१ ॥

अहह संस्मर्यमाणानि हृदयकम्पमेवारचयन्ति कुग्रामनिलीननरव्याघ्राणां निखिलप्रजावर्गप्राणहराणि दुर्धीनखविक्रीडितानि, यथा—

त्यजन्ति स्वां वृत्तिं चिरपरिचयानादरहताः

विचित्रैः पैशुन्यैः सुजनमपि कर्षन्ति कुसृतौ ।

विवादप्रागल्भ्यैरनुपदसमुद्घोषकथितैः

विमोह्यैवाशेषान् ननु चुळकयन्त्येव धनिनः ॥ २२ ॥

किं च—

न सत्यं नो शौचं न च परदया नाप्यघभयम्

न धर्म्या स्वा वृत्ति. नियतमनिशं क्षात्रचारितम् ।

सदा दुष्टाभ्यूहैर्नृपतिनियमक्षोभणकला
जगत्येव स्याच्चेत् क नु वसतु धर्मो हतपदः ॥ २३ ॥

प्र—अग सत्यमेवैतत् । तथाऽप्यनवरतनीतिपरिचयानिर्मग्ना प्राड्विवाका एवंविधानप्यतिशय्य सुविरचितविमर्शास्संचूर्णयन्त्येव दुर्णयान्, यथा

अपन्याये वादे परिकलितसाक्ष्यान् हि पुरुषान्
विचित्रप्रश्नाळीविरचितमतिक्षोभविवशान् ।
वितन्वन्तस्तत्त्वेष्ववदधति निस्तन्द्रमतय
प्रतिज्ञाहेत्वादेः बहुविधविरोधप्रकथने ॥ २४ ॥

विमृश्य आ. यद्यपि—

यदा धर्मैकान्ता. कपटघटनाद्दूरमतयः
समीचीने वादे विहितयतना स्यु कृतधियः ।
अपन्यायौपम्याद्विरचितमहाडम्बरभरः
तदाप्युद्घुष्येच्चेदहह भविता धर्मविलय. ॥ २५ ॥

अथाऽपि खलु —

राजा

विचित्रैर्नीतीनां प्रसरणपथैराकुलधियां
विमर्दानां शान्त्यै नृपतिरवधत्ते कृतमतिः ।
तटस्थैस्तत्त्वार्थं निभृतमवगत्याखिलमपि
स्वयं धर्मं रक्षन् रचयति च दण्ड सुनिपुण· ॥ २६ ॥

पुनर्विमृश्य सखेद , ननु नाम नीतिरिति शास्त्रमेव जागर्ति , यदनुसृत्य-व्यवहारविमर्दे प्रगमः प्रचलति । तत्किमिदं स्वातन्त्र्यं नाम नृपतेः—

सुवादिच्छायानामबहुविदितार्थेषु भविनां
विवादेषु न्यायैरपरिशमिते तत्त्वविशये ।

यथेच्छं निर्णेष्यन् नृपतिरविनीतानपि तदा
न जानीतैव स्यादपि हि चतुरो नीतिमथने ॥ २७ ॥

द्वि—भद्र देशकुटुम्बिनो निर्मत्सरस्य तस्य मतिवैभवे नियममायतते धर्ममर्म—

दिगीशांशैस्तैस्तैस्समुचितमहावैभववत
नृपान्नीत्यासङ्गप्रगुणितसुमेधामहिमत. ।
फलन्त्येव न्याया समुचितविनिर्णीतिकुशला'
अतस्तत्स्वातन्त्र्य मुनिभिरिह कण्ठोक्तिविदितम् ॥ २८ ॥

प्र—अपि मुनीनामप्यत्र समति. ?

द्वि—सत्य यदाह हारीतः—

धर्मश्च व्यवहारश्च चरित्र राजशासनम् ।
चतुष्पाद्व्यवहारोऽय उत्तर पूर्वबाधक' ॥ इति ॥ २९ ॥

प्र—न जानामि तात्पर्यमस्य मुने'

द्वि—धर्मः व्यवहारः चरित्र राजशासम् इतीमानि विवादनिर्णयानां नामधेयानि ।

प्र—किन्निबन्धनान्यमूनि नामानि ?

द्वि—गुणाना सुविमर्शेन यो वादिप्रतिवादिनोः ।
शपथैर्वा विषाग्न्यादे. निर्णयो धर्म इष्यते ॥ ३० ॥

प्र—युज्यते—

आजानशुद्धचरितानवलोक्य लोके
विश्वास उद्भवति कस्य न धार्मिकस्य ।
आगस्विनो य इह तद्विषये पुमास
निर्णीतिरत्र नियतं ननु धर्ममूला ॥ ३१ ॥

द्वि—अतः किल तादृशेषु महात्मसु वञ्चनं दोषारोपो वा भवति दण्डनिदानम् ।

प्र—द्वितीय. कीदृशो निर्णय ?

द्वि—प्रत्येक प्रतिजानतो. पुरुषयोरुक्तीः पृथग्गृह्णता
साक्ष्युक्तीरपि साविमृश्य बहुधा न्यायानुगुण्यक्रमात् ।
बाहुल्य गुणदोषयोर्गणयता निर्मत्सरेण न्वय
निर्णीतिर्व्यवहारनाम भजते शश्वन् प्रजाना हिता ॥ ३२ ॥

प्र—इयमेव जगत्यतिविस्तृता प्रचरति निर्णयसरणिः । तृतीयस्तु कीदृश ?

द्वि—कस्यचिद्द्रव्य मुषित यत् समक्षे परोक्षे वा तदेव हस्ते कुर्वन् तद्द्रव्यधारणाननुगुणो यत्र विवदमानस्स्यात् तदा परीक्षकम्य तद्धस्तगत द्रव्यमेव सुविमृश्यमान वादनिर्णायकम् । तदुद्भवश्च तृतीयो निर्णयः ।

प्र—इदानी तु कुशलाः स्तेना अपि दुरवगमस्तेया एव प्रचरेयुः । अस्तु । तुरीयस्तु कीदृशः ?

द्वि—यदा त्वत्याहित किञ्चित् संशयाकुलितोऽपिवा ।
वादो दुर्निर्णय पासः तुर्यस्तत्र विनिर्णयः ॥ ३३ ॥

विमृश्य युज्यते; सुमहत्यामापदि कथमस्ति वादप्रवर्तनावसरः यथा राजावरोधप्रविष्टचोरप्रग्रहणे । कथं च निर्णयेयु प्राड्विवाका. पक्षे बलतारतम्यहीनान् विषमवादान् । तदिदमुभयमायतते राज्ञामाज्ञासु ।

अपि च—भद्र शृणु विषमवादानपरानपि—

कृत स्तेय सत्य भवति किल साक्षी च विदित.
निदानात्कस्माच्चिद्भणति किल साक्षी यदनृतम् ।
तदा राज्ञा स्तेयं कथमिव हि निर्णेतुमुचित
ध्रुव धर्मोल्लङ्घः फलति नच गत्यन्तरमिह ॥ ३४ ॥

प्र—ननु नाम मिथ्यासाक्षी कथ श्रद्धेय ।

द्वि—इह साक्षी मिथ्याकारी न निर्णीत ।

प्रत्युत मिथ्यासाक्ष्यमनुजानाति क्वचित् धर्मशास्त्रम् ।

प्र—हन्त कथमेतदपि ।

द्वि—शृणु मनुयाज्ञवल्क्योर्वचसी—

शूद्रविट्क्षत्रविप्राणा यत्रर्तोक्तौ भवेद्वध ।

तत्र वक्तव्यमनृत तद्धि सत्याद्विशिष्यते ॥ इति ।

वर्णिना हि वधो यत्र वदेत्साक्ष्य तदाऽनृतम् । इति च ।

प्र—हन्त सुविषमा निर्णयसरणिः यत् सदपि स्तेय मृषाकृत व्यवहारेण सर्वथा मुनयस्स्वयमज्ञा एव वञ्चयन्ति लोकम् ।

द्वि—कथय भवतैव प्राड्विवाकीभवता स्तेय कृतमेवेति कथ निर्णीयेत । मोहान्निन्दासि परं मुनीन् ।

स्वय य. कन्दाशी सुनियमकृशश्चीरवसनो

न लोकाकाङ्क्षी च प्रचरति तपस्यास्वविरतम् ।

न लाभो नो हानिर्नरविरचितैर्वादविशयैः

तटस्थस्यास्य स्यात्कथमिह मति पापचरिता ॥ ३५ ॥

प्र—सत्यमेतत्—सङ्कटा न्यायनिर्णया ।

द्वि—इदमपि शृणु—

कुतश्चित् सगृह्णान् स्वयमृणमवाप्ते तदवधौ

प्रदेहीत्याकृष्टः प्रकटयति निस्स्वत्वमिह यः ।

ततः पश्चात्प्राग्वा ऋणमपरतश्चेत्स कुरुते

न दद्यां चेद्ब्रूयात्कथमिह भवेन्निर्णयपथः ॥ ३६ ॥

प्र—किमत्र प्रष्टव्य ? प्रत्यर्पणीयमित्येव निर्णयः ।

द्वि—किंवेत्थ राजकीयमत्र निर्णयम् ?

प्र—कथमसौ ?

द्वि—न निर्बध्येत राज्ञाऽसौ निस्स्वत्वख्यापको नर ।
विमृश्य किल दातव्यमवश्य मृणदायिना ॥ ३७ ॥

प्र— आ. पाप किल कृत स्यात् ।

द्वि—कथमिदमपि पाप नाम ? तदिद व्यवहाराचरित्रप्राबल्यम् ।
भवितव्य निराशेन ह्यविमृश्यर्णदायिना ।
कष्टश्चात्र प्रतीकार सविषान्नभुजो यथा ॥ ३८ ॥

प्र—कष्टो धनव्यवहारः ।

द्वि—कथ सकृदुच्यते कष्टमित्येव; न तु कष्टतममिति समास्र वारान्,

प्र—एवचेदृणग्राहिण. प्रतारयेयु –
प्रसूय सदृशापत्य परिपोष्य चिर मुदा ।
शोचतो मृत्युना ग्रस्त तुल्य एवविधो नर. ॥ ३९ ॥

द्वि—सत्य तत्तुल्य एव ।

प्र—अलं नीतिव्रातै. अलमपि च कष्टार्जितधनै
कुसीदोत्सौधैरप्यलमलमहो मूलविलयैः ।
कियद्दु ख ह्येतत् न च तदनुभोक्तु क्षममितो
नच त्यक्तु शक्य तुदति ननु जालान्तरमिव ॥ ४० ॥

द्वि—अतः खलु व्यवहारमार्गं दुर्गमनुसदधता सावधानेन भवितव्यम् ।
जयेयुर्जीयेरन् सततमपि तच्चिन्तनपरा
शपेयुश्शप्येरन् स्वगुणमविचिन्त्यैव कुपिता. ।
सुषुप्सुः स्वाप्येरन् भृशविमनसो दुःखनिबिडाः
नरा वादग्रस्ता· किमिह सुखमल्प मृगयसे ॥ ४१ ॥

प्र—नरकान्नातिविशिष्यते नरलोकः ।

द्वि—रागद्वेषबाहुल्ये सत्यं तथाविध एव नरलोकः । तथाऽपि–
प्रगुसद्यै लोकानां परिकलितमूर्तिर्दिगधिपैः
दुरूहन्यायानां परिचयचयो देहभृदिव ।

स्वय तोषोदर्कप्रद इव निशाया शशधरो
विमोहे वादोत्थे ननु नृपतिरानन्दयति न· ॥ ४२ ॥

प्र—राजाप्येवविधेषु विषमविवादेषु कि करोतु ?

द्वि—किमिद कि करोत्विति, किं न करोतु—

विजानन् लोकाना विषमचरित गूढपुरुषैः
नृपो नीतेर्मार्गान् कलयति जगत्क्षेमविधये ।
कुटुम्बेष्वन्योन्य कलहकलुषेष्वप्यवनिपो
कुटुम्बी सर्वेय· स कथमपि नोपेक्षत इह ॥ ४३ ॥

प्र—ननु नाम स्वरचितेष्वेव नियमेषु तादृक्षु जाग्रत्सु किं राज्ञः कृत्यमस्ति ?

द्वि—भद्र! राजकृत्यात्कोन्यो नीतिनियमो नाम—

यथाशास्त्र नीती रचयति हि नव्या अपि तथा
यथाकाल तासा प्रभवति च सकोचकलने ।
जगत्क्षेम मुख्ये किमिह रचितैर्न्यायकलहै.
अतस्सर्वेषां स्यान्नृपतिरवलम्बो दृढतरः ॥ ४४ ॥

किञ्च—नृपतिर्दृढमवलम्बनमित्येतावता न राष्ट्रेऽखिलैरपावृतगृहद्वारैः स्वयमुदायुधै· दुरन्तविवादनिरतैर्वा भवितव्यम् । यावाद्विवादोत्पाद हि पुंसां निरुद्वेग सुखम् । यत

दुरन्तै राक्रोशै· श्लथयति यथा न्यायजनितै·
व्यवस्था संसिद्धां भवति च तथा क्षोभविभव· ।
भृशं क्षुब्धो लोको भवति किल रोषैकविवश
तदानी न न्यायो नच नृपभयं नैव च सुखम् ॥ ४५ ॥

अत सर्वैः शमपरैः यथाशक्ति विनिवार्य मतिक्षोभं लोकयात्रा निर्वाह्या दुर्निवारे च क्षोभे न्यायावलम्बो वादः प्रवर्तनीय । निर्विवादं चासौ सर्वाभ्युपगमनीयोंशः ।

प्र—युज्यते, विहारैर्व्याहारैर्व्यवहृतिभिरुद्वेजयति नो
जनान् नष्टे स्वल्पे न बहुगणयेद्दाग्रहभरैः ।
विना क्षोभादुग्रात् नच भवति यः क्रोधवशग.
न वादास्तस्य स्युः क्वचिदपि हि भङ्गाकुलपथाः ॥ ४६ ॥

द्वि—साधूक्तं साधूक्तं लोकहितं महानुभावेन–किमिहान्यदाशास्महे—
लोकस्तुष्यतु धर्म आत्मकुलजे नित्यं रतः देवताः
लोकान् वृष्टिभिरिष्टसस्यनिवहामोदान् सदा तन्वताम् ।
देशक्षोभकरश्शमेन महता क्रोधस्सदा क्षीयता
देशश्शार्ङ्गधरो ददातु जगते श्रेयांस्यमून्यञ्जसा ॥ ४७ ॥

**सो. नरसिंहाचार्यः.**

## श्री॥ पण्डित मदनमोहन मालवीय महाशयानां स्वागत महापाठशालाध्यक्षसमावेदितम्.

अथ खल्वस्या श्रीमन्महाराज संस्कृत महापाठशालाया जि. सि. एस्. ऐ., जि. बि. इ इत्यादि बिरुदविभूषितानां श्रीमन्महाराज श्रीकृष्णराज सार्वभौमवरेण्याना चतुश्चत्वारिंशः वार्षिक जन्म महोत्सव. सादरमतिसभ्रम चानुप्रवर्तित इति सर्वजनविदितमेतत् । तादृशमहोत्सवानुबन्धेनास्मद्देशमलङ्कुर्वता तत्रभवतां लोकमान्यविचक्षणवरेण्याना मदनमोहनमालवीयाभिधाना महाशयाना अस्मत्प्रार्थनानुसारेणाधुना पाठशालासमलंकरणाभ्युपगम अस्मद्भागधेय एवायतते । तत्रभवन्त स्समधिकगुणमाहात्म्यशालिनश्चेमे महाशयाः प्राक् राजधानीनिकटमभ्यागता अपि पाठशालासमलंकरणमिदमिदंप्रथममेव कुर्वन्ति । अनेनचैषां समागमेन इयं पाठशाला महामहिमवती कृता, वय च निरतिशयेन सन्तोषेण कृतज्ञतादिना चातीव प्रोत्साहिता भवाम ॥

एतेषां नामधेय कल्याणगुणा कार्यविशेषा, कीर्त्यतिशयादय सर्वेपि सर्वेषा सुगृहीता अपि अत्र वर्तमानाना केषांचित् प्रौढविद्यार्थिनां इतरेषा च ग्रामान्तरादागताना महाशयानां न खलु विदिता इति संग्रहेण तान् प्रतिपादयितुं भवदनुज्ञां समभ्यर्थये ॥

एतच्चरित्रश्रवणेन च न केवलमस्माकं सर्वेषामप्येतद्विषये वर्तमानं गौरवादिकं द्विगुणितं भवति । अपित्वेतेषां विद्यार्थिनामितरेषां च तन्मार्गानुसरणे मतिः प्रसरतीत्यत्र न कोपि विशयः । अत एतादृशामोघफलप्रदसमयोपेक्षणं नोचितामिति सर्वसमतं चेति सुदृढं प्रत्येमि ॥

एते च मदनमोहनमालवीयाभिधानाः पण्डितोत्तमा. सद्धर्माचरणपराणा कर्मठानां ब्राह्मणोत्तमानां अन्वयमलंकृतवन्तः । अनेके पुरातनाश्चैतद्वंश्यिा. गैर्वाणवाण्यां महान्तं प्रौढिमानमभजन् । भाग

वतादि पुराणश्रावणे लब्धप्रतिष्ठा , असंख्याकाना ज्ञानभक्तिरसपरिपूर्णग्रन्थाना रचनायामतीव कुतुकिन । सुप्रसिद्धतरा पण्डितव्रजाभिधानाश्चैतेषां पितर वाराणसी-दरभगादि-विद्वज्जनपरिपूर्णदेशेषु तत्तन्महाराजास्थानेषु महाराजभि सम्मानिता अभवन् । इमे च मदनमोहनमालवीया. एकषष्ट्यधिकाष्टादशशततमे क्रैस्तसंवत्सरे 1861 A D प्रयागे जनिमापन्ना पूर्व एव वयसि धर्मज्ञानोपदेशपाठशाला', 'विद्याधर्मवर्धिनीसभा' इत्यादिषु गीर्वाणपाठशालासु देवभाषां सम्यगभ्यस्य तत आंग्लभाषापरिचयोत्का क्रमेण बि.ए.. एल्‌एल्.बि . इत्याद्युपाधिकांग्लभाषापरीक्षासूत्तीर्णाः तस्यां भाषायामपि पर प्रावीण्यमधिगता वर्तन्ते ॥

एतेषा बाल्य एव जगत्सेवाकरणे प्रवृत्ति प्रादुरभूत् । देहयात्रार्थं पर एते प्रथममल्पवेतना उपाध्यायवृत्तिरभ्युपगताऽपि आर्यविद्याभ्यासादिविचारेष्वतीव श्रद्धातिशयमगीकृत्य देशकालोचितं कार्यं यथायथं निर्वर्त्य परा ख्यातिरुपार्जिता ॥

ततश्च सर्वासामपि प्रजानां ज्ञानविकाससम्पादनार्थं वृत्तान्तपत्रिकादीन् प्रचार्य तद्द्वारा सर्वत्राप्यस्मिन् भरतखडे स्वान् गुणान् प्रकाशयामासुः । प्रजाहितायैवोपकल्पितेषु कांग्रेस्सादि सदस्सु बहुकालमतिधैर्यसाहसचमत्कार विषयान् सर्वानपि सम्यगुपपाद्य महान्तं लोकोपकार चक्रु ॥

सर्वेषामप्यांग्लमहाधिकारिणा सामानाधिकरण्येन ससौमनस्यं ससहकार च संतोषजनकव्यापारकरणेन सदा स्वकार्याणि कुर्वन्तः- तेषामस्मद्देशेषु सहजां प्रतिभुत्पादयितुं प्रयतमानाः अनन्यसाधारणकार्यनिर्वाहदक्षतावन्तश्च वर्तन्ते । प्रायशः पंचषान् वत्सरान् न्यायस्थानेषु न्यायविमर्शकपदमप्यंगीकृत्य व्यवहारविचारकरणेन तद्विषयेऽप्यन्यादृशी शक्तिरेभिरधिगता ॥

यद्येते स्वार्थमात्रपरायणा आशाग्रहग्रस्ता वा भवेयु, तदैते स्वशक्त्यनुगुण महाराजादिभिरप्यलभ्य धनकनकादिक उत्तमाधिकारादिक महावैखर्युपेतबिरुदादींश्च प्राप्नुयुरित्यत्र न कस्यापि संशयलेशस्य अवकाश. । परन्त्वेते एतादृशेषु विषयेष्वनासक्ता अपि देशसेवाप्रजासेवादिषु तत्पराः तदर्थमेव सर्वमपि जीवितं विनियुज्य निरन्तरं शाश्वतिक च यशस्समुपार्जयामासु ॥

एभिरस्मिन् भरतखंडे स्थापितस्य विश्वविद्यानिलयस्यैकस्यैव वा माहात्म्यवर्णनमेतेषा शक्त्यतिशय माहात्म्यविशेष च विवृणोति । महामहिमवत्त्वादेवैतेषा, राजा, सर् इत्याद्युपाध्युपेता टि. माधवरायवर्या· दिवान् बहदूर् पदालंकृता आर्. रघुनाथरायवर्या इत्याद्यस्मद्देश्या अनेके महान्त- वैस्रायपदमाधिकृताश्चानेके आंग्लाधिकारिणः एतान् एतदीयगुणाश्च विशेषत प्रशस्यात्यैव मानयामासुरित्युक्तिः न केवलातिशयोक्तिर्भवति । आसेतुहिमाचलं एभिः विद्याभ्यासविषये विद्यार्थिनां कृते कृतेनोपकारेण भरतखंडनिवासिनः अखिलानपि मानवान् ऋणिनः कृतवत्या कृतया देशसेवया च प्रख्यातानां गुणानां सुप्रसिद्धानां पुन पुन संकीर्तन आनन्दमेव जनयति । विशेषतो लब्धप्रतिष्ठानामेतेषां पंडितवराणां नामधेये मालवीयपदात्पूर्वभागे वर्तमानः मदनमोहनशब्दः मदनमपि मोहयतीत्यरिषड्वर्गजिष्णुता व्याकरोतीत्यन्वर्थ एव प्रथते ॥

एवमस्मत्प्रार्थनामंगीकृत्य अत्रागत्य महान्त सन्तोष जनयद्भ्यो महाशयेभ्यः सर्वेषामप्यत्रत्याना सामाजिकानामभिप्रायानुसारेण कृतज्ञताप्रदर्शकमभिनन्दनं समर्प्य करिष्यमाणकार्यविशेषकरणे अनुमतिमभ्यर्थये एतैर्महाशयै एवमेव अस्मत्पाठशालाविषये निरतिशयोऽभिमानः कर्तव्य इति भगवन्तमपि प्रार्थये इति शम् ॥

तदुच्यते अतिक्रमिष्याम इममाम्नायम् । अनतिक्रामन्तो वेदमर्थवन्तं सन्तं अनर्थकमवकल्पयेम । दृष्टो हि तस्यार्थः कर्मावबोधनं नाम । नच तस्याध्ययनमात्रात् तत्र भवन्तो याज्ञिकाः फलं समामनन्ति । यदपि च समामनन्तीव तत्रापि "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्" इत्यर्थवादतां वक्ष्यति ॥

अत्र स्नानस्यैव दौर्बल्यं. अन्यथा हि समस्तस्यैव वेदस्यार्थावबोधार्थतयाऽध्ययनोपात्तस्य तदसाधनत्वेनानर्थक्यापत्तिः । नात्रादृष्टार्थता शक्या कल्पयितुम् । दृष्टो हि तस्यार्थः कर्मावबोधनं संभवति । अतः स्वाध्यायविधिनाऽर्थावबोधाय्याऽध्येतव्यो विहितो वेदः विचारमन्तरेण तादर्थ्यासंभवात् विचारमाक्षिप्य तद्विरुद्धं स्नानं बाधत इत्याह—तदुच्यत इत्यादिना ॥

समामनन्तीवेति ॥ "यदृचोऽधीते पयसः कुल्या अस्य पितॄन् स्वधा अभिवहन्ति । यद्यजूंषि घृतस्य कुल्याः । यत्सामानि सोम एभ्यः पवते" इत्यादिकमित्यर्थः ॥

द्रव्यविषये फलश्रुतिः—"यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्यादिः ॥ संस्कारे फलश्रुतिः—"यदाङ्क्ते, चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्यादि ॥ कर्मणि फलश्रुतिरियम्—"यत्प्रयाजानूयाजा इज्यन्ते, वर्म वा एतत यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै" इत्यादिः ॥

अथैते फलविधयः, प्रवृत्तिविशेषकरत्वात् फलविधेः । नैव, किंतु परार्थत्वात् क्रत्वर्थत्वात् एते अर्थवादाः प्ररोचनार्थाः । यदि फलेऽपि गुणभावस्स्यात् अन्यत्रोपदिष्टाना परार्थानामन्यत्र पुनर्गुणभाव

नचाधीतवेदस्य स्नानानन्तर्यमेतद्विधीयते । न ह्यत्रानन्तर्यस्य वक्ता कश्चिच्छब्दोऽस्ति । पूर्वकालतायां क्त्वा स्मर्यते । नानन्तर्ये । दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येत । लक्षणया त्वेषोऽर्थः स्यात् ॥

नचेद् स्नानमदृष्टार्थं विधीयते । किं तु लक्षणया अस्नानादिनियमस्य पर्यवसानं वेदाध्ययनसमकालमाहुः ॥

उपदिष्ट इति प्रसज्येत, नचैतन्न्याय्यम् । क्रत्वर्थता च "जुह्वा जुहोति" इत्यादिशब्देन सिद्धा । न तस्मात्पुरुषार्था इति (४—३—१) सूत्रार्थः ॥

विरोधाभावादपि न स्मृतिर्विचारं बाधते इति दर्शयति—नचाधीतेति ॥ क्त्वाशब्दस्यानन्तर्यार्थतापरिग्रहे अध्ययनस्य दृष्टार्थता व्याहन्येत । तदविरोधाय पूर्वकालतामात्रमेव लक्षणया ग्रहीतव्यमित्याह—दृष्टार्थेति ॥

ज्योतिष्टोमादिवत्फलार्थं दीक्षितस्नानवत्संस्कारार्थं वा स्नानं यो मन्यते तं प्रतिवक्ति—नचेदमिति ॥ अयमाशयः—"वेदमधीत्य स्नायात्" इति स्मृतेः अस्नानादिब्रह्मचारिनियमं वर्जयेत् अध्ययनसमाप्तिरेव तस्यावधिरिति । सर्वनियमानां चाध्ययनाङ्गत्वात् तत्समाप्तौ निवृत्तिः न्यायप्राप्तैव । न्यायमूलत्वाच्च स्मृतेः न लक्षणादोष इति ॥

एवं च अध्येतव्य इत्यध्ययनवाचिनस्तशब्दस्यार्थावबोधनार्थत्वं स्नानशब्दस्यास्नानादिनियमनिवृत्तिपरत्वं अथशब्दस्य गुरुकुलनिवृत्तिव्यवृत्तिपरत्वं सर्वत्र दृष्टार्थत्वं कारणमिति निष्कर्षः ॥

ननु स्नात्वाऽप्यर्थे जिज्ञास्यमाने वेदस्यानर्थक्यं न संभवति । नापि स्मृतिविरोध इति चेन्न । "स्नात्वा भार्यामुपगच्छेत्" इति

वेदमधीत्य स्नायात् गुरुकुलान्मा समावर्तिष्टेत्यदृष्टार्थेना परिहारायैव ॥

तस्माद्वेदाध्ययनमेव पूर्वमभिनिर्वर्त्यानन्तरं धर्मो जिज्ञासितव्य ॥ इत्यथशब्दस्य सामर्थ्यम् । न च ब्रूमोऽन्यस्य कर्मणोऽनन्तरं धर्मजिज्ञासा न कर्तव्येति । किन्तु वेदमधीत्य त्वरितेन नस्नातव्यं, अनन्तर धर्मो जिज्ञासितव्य । इत्यथशब्दस्यार्थः ॥

गार्हस्थ्यविधानात् तत परमपि जातपुत्र. कृष्णकेशोऽग्नीनादधीत" इत्याधानविधानात् तत पर नित्यनैमित्तिककर्मविधानात् शिर कण्डूयनस्याप्यवसरालाभात् अविदुषश्चाधिकाराभावाच्च कस्यचिदवश्यवक्तव्ये बाधे अध्ययनानन्तरमुपनिपतितो विचार तत्कालवर्ति स्नानमेव बाधत इति निर्णयात् । अर्थक्रमो हि पाठक्रमस्य बाधक इति सिद्धान्तः ॥

तस्मात् गुरुकुले तिष्ठन् मधुमांसाद्यवर्जयन् ।
जिज्ञासेताविरुद्धत्वात् धर्ममित्यवगम्यते ॥
गुरुगेहादनावृत्त· स्नातको न भवेन्नरः ।
विचारतत्परत्वाच्च न तावद्दारसंग्रहः ॥

इति निष्कर्षः ॥

अधीत्य स्नायादिति स्मृतेः अस्नानादिनियमपर्यवसानार्थतां व्याख्याय तामेवानुकीर्तयत्ययमेवार्थोऽस्या इति सूचयितुम्—वेदमधीत्य स्नायादिति ॥ गुरुकुलेत्यादि भाष्यस्यायमर्थः—न सर्वस्य स्मृत्यर्थस्य बाधः किंतु गुरुकुलनिवृत्तिमात्रस्य । तत्रापि दृष्टार्थत्वं कारणमिति ॥

अथशब्दार्थं निगमयति—तस्मादिति ॥ "इत्यथशब्दस्य सामर्थ्यम्, इत्यथशब्दस्यार्थ" इति वाक्यद्वयं लेखकविभाग· स्यात् इत्युत्प्रेक्ष्यते ॥

**अतश्शब्दो वृत्तस्यापदेशको हेत्वर्थः । यथा क्षेमसुभिक्षोऽयं, अतोऽहमस्मिन् देशे प्रतिवसामीति । एवमधीतो वेदः धर्मजिज्ञासायां हेतुः ज्ञातः, अनन्तरं धर्मो जिज्ञासितव्यः ॥**

अतश्शब्दार्थमाह—अतश्शब्द इति ॥ अत्रापि भाष्ये "अतश्शब्दस्य सामर्थ्यं, अतश्शब्दस्यार्थः" इति विभागः पठ्यते । सोऽपि स्यात्पूर्ववदुत्प्रेक्षार्हः ॥

अयमत्र विचारः—यदि चाध्ययनं जिज्ञासाया हेतुस्स्यात् ततस्तदानन्तर्यं दृष्टार्थं भवति नान्यथा । अतोऽथशब्देनैव अध्ययनहेतुता सिद्धेति किमतश्शब्देनेत्याशङ्का ॥

त्रेधा तस्याः परिहारः—आद्यो यथा—अध्ययनेन धर्मजिज्ञासायां अधिकारलक्षणं योग्यत्वं भवतीत्येतादृशं योग्यत्वं यद्यप्यथशब्देन सिद्धं भवति । तस्यैवानुष्ठानहेतुत्वं वक्तुमतश्शब्द इति । एतदुक्तं भवति—अध्ययनविधिर्हि अर्थज्ञानार्थतया अध्ययनं विदधत् विचारमन्तरेण तदसंभवात् विचारमाक्षिपति । अतः अधीते वेदे तूष्णीमेवस्थातुं न शक्यते । अतश्च विधिरयं त्रयाणामेव वर्णानां प्रकृतानामुपनयनसंस्कृतानां अध्ययनं विचारं च विधत्ते इति सिद्धं भवति । तेषु च विद्वत्सु लब्धेषु चरितार्थाः कामश्रुतयः नाविद्वांसमधिकृत्य तस्य विद्यां प्रयोक्तुमर्हन्ति । अतश्च शूद्राधिकारो निवर्तते । अनेन प्रयोजनवानतश्शब्द इति ॥

द्वितीयो यथा—वृत्तस्य हि हेतुत्वमतश्शब्दो वदति । तेन यस्य वृत्तस्य हेतुत्वं तत् अथशब्देनापेक्षितमिति प्रत्ययात् अध्ययनानन्तर्यसिद्धिः । अपरथा मङ्गलार्थताऽप्यथशब्दस्याशङ्क्येत । यद्यपि माङ्गल्यस्य अन्यार्थानीयमानोदकुम्भादिवत् अथशब्दस्यानन्तर्यवाचिनः

इत्यतश्शब्दस्य सामर्थ्यम् । धर्माय हि वेदवाक्यानि विचार-यितुं अनधीतवेदो न शक्नुयात् । अत एतस्मात्कारणात् अनन्तरं धर्मं जिज्ञासितुमिच्छेत् । इत्यतश्शब्दस्यार्थः ॥

धर्माय जिज्ञासा धर्मजिज्ञासा । सा हि तस्य ज्ञातु-

प्रासङ्गिकं प्रयोजनं, नाभिधेयम् । तथापि यत्किंचित्क्रियानन्तर्यमर्थ-प्राप्तमनुवदन् मङ्गलार्थतयाऽथशब्दः प्रयुक्त इति संभाव्यतेति ॥

तृतीयस्तु—अध्ययनस्य जिज्ञासाहेतुत्वेऽथशब्देन प्रतिपा-दितेऽपि तस्यैव स्नानबाधहेतुत्वमभिधातुमतश्शब्द इति । अधीतवेद-तया विचारयोग्येन कर्माधिकाराय क्षिप्रमेव विद्वत्ताय यतितव्यं न स्नातव्यमिति । तदत्र सग्रहः—

आनन्तर्येऽप्यहेतुत्वं हेतुत्वेऽपि विलम्बनम् ।
दृष्टमिष्ठ च, तत्सार्थमथातश्च पदद्वयम् ॥ इति ॥

धर्मं जिज्ञासितुमिच्छेदिति ॥ यद्यप्यत्र सन्निच्छत्योरिच्छैवार्थ इति पौनरुक्त्यमिव भाति । तथापि सनः ज्ञानं कर्म, इषेस्तु धर्मः ज्ञानेच्छैव वा द्वयं वा कर्मेति विषयभेदान्न पुनरुक्तिः । तुमुनः समा-नकर्तृत्वं लिङः विधिरर्थ इति तयोरप्यर्थभेदः । ननु एकैव ज्ञानेच्छा सूत्रिता, कथमत्र द्वयमुपादीयते इति चेत्—सूत्रितामेवेच्छामभिनिर्वर्त-यितुमिच्छान्तरमुक्तम् । नचेच्छाविषयमिच्छान्तरं नेष्यत इति वाच्यं, मन्दाग्नीनां भोजनेच्छायामिच्छादर्शनात् ॥

धर्माय जिज्ञासेति ॥ अत्रायमाक्षेपः—यत्र हि तादर्थ्ये चतुर्थी समस्यते तत्र विकृतिरेव चतुर्थ्यन्ता प्रकृत्या समस्यते, यूपदार्वादौ दर्श-नात् । "चतुर्थीतदर्थे प्रकृतिविकृतिग्रहणं कर्तव्यम्" इति वार्ति-ककारेणोक्तमिति ॥ अयं परिहारः—सा हि तस्येत्यनेन भाष्येण

मिच्छा। स कथं जिज्ञासितव्यः? को धर्मः? कथंलक्षणः? कान्यस्य साधनानि? कानि साधनाभासानि?। किंपरश्चेति। तत्र को धर्मः कथंलक्षणश्चेति एकेनैव सूत्रेण व्याख्यातं चोदनालक्षणोऽर्थो धर्म इति। कान्यस्य साधनानि कानि साधनाभासानि किंपरश्चेति शेषलक्षणेन व्याख्यातम्। क पुरुषपरत्वं क वा पुरुषो गुणभूत इत्येतासां प्रतिज्ञानां पिण्डस्यै तत्सूत्रं—अथातो धर्मजिज्ञासेति॥

धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा? स चेत्प्रसिद्धः न

अत्र षष्ठीसमास, न चतुर्थीसमास इति दर्शितम्। षष्ठी च सम्बन्धसामान्यमभिधत्ते। तस्य तु निर्विशेषस्यानुपपत्तेः तादर्थ्यरूपविशेषनिष्ठता धर्मायेति भाष्येण दर्शितेति[1]॥

साधनाभासानीति॥ अन्यस्य साधनमन्यस्य साधनाभासमुच्यते। यथा क्रत्वर्थं पर्णमयीत्यादि पुरुषार्थस्यापापश्लोकश्रवणादेः फलस्य साधनाभासम्। पुरुषार्थं च गोदोहनादि क्रतोस्साधनाभासमिति॥ "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति। गोदोहनेन पशुकामस्य प्रणयेत्" इति च विषयवाक्यम्॥

शेषलक्षणेनेति॥ शेषं च तल्लक्षणं चेति कृत्स्नशास्त्रेणेत्यर्थः। किंपर इत्यस्य विवरणं—क पुरुषपरत्वं क वा पुरुषो गुणभूत इति॥ पुरुषपरत्वं पुरुषार्थत्वम्। गुणभूतत्वं क्रत्वर्थत्वम्॥

अथ शास्त्रसंबन्धमाक्षिपति—धर्मः प्रसिद्धो वेति॥ तत्र प्रसिद्धे ज्ञानमस्ति न जिज्ञासा। अप्रसिद्धे तूभयं नास्ति।

[1] चतुर्थीसमास एव प्राभाकरैस्साधितः.

जिज्ञासितव्य.। अथाप्रसिद्धः न तराम्। तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम्।

अथवाऽर्थवत्। धर्मं प्रति हि विप्रतिपन्ना बहुविदः केचिदन्यं धर्ममाहुः केचिदन्यम्। सोऽयमविचार्य प्रवर्तमानः कंचिदेवोपाददानः विहन्येत, अनर्थं च ऋच्छेत्। तस्माद्धर्मो जिज्ञासितव्य इति। स हि निःश्रेयसेन पुरुषं संयुनक्तीति प्रतिजानीमहे॥

तदेतदभिधीयते—चोदनालक्षणोऽर्थो धर्म.॥२॥

अतो धर्मस्याजिज्ञास्यत्वात् प्रतिपाद्यप्रतिपादकभाव. शास्त्रप्रयोजनसबन्धः नास्ति शास्त्रावतारहेतुभूत इति भाव.। धर्मजिज्ञासाप्रकरणं धर्मजिज्ञासारम्भ' शास्त्रमिति यावत्॥

परिहरति—अथवाऽर्थवदित्यादिना॥ तत्र धर्मस्याजिज्ञास्यत्वे कारणद्वयमुक्त विप्रतिपत्त्या सांशयिकत्व स हीत्यनेन प्रयोजनवत्त्व च। एतेन पूर्वपक्षहेतुरसिद्ध इति भावः। एकमार्गदर्शिनामज्ञानां च संशयानुपपत्तेः बहुविद इत्युक्तम्॥

एवं धर्मविषये महान्तमर्थकलाप प्रतिज्ञाय शास्त्रमारभत इत्याह—तदेतदभिधीयत इति॥ योऽयं निष्प्रमाणक प्रत्यक्षादिप्रमाणक चोदनाप्रमाणकत्वादीनां विप्रतिपत्तिविशेषाणां विषयीभूतः साधारणात्मा धर्मपदार्थः स चोदनाप्रमाणकः चोदनैव तस्य प्रमाण न प्रत्यक्षादि। चोदना च तत्र प्रमाणमेव, नाप्रमाणं, इत्येवमुभयथापि धर्मानुवादेन प्रमाणविधिः। तेन किंप्रमाणको धर्म इति विप्रतिपत्तिरपोदिता। किंस्वरूप इति विप्रतिपत्तिस्तु सामान्यविषया विशेषविषया चेति द्विधा। तत्र प्रमाणमेवेति प्रमाणविधेरेवार्थात् तद्गम्यस्याग्निहोत्रादे धर्मत्वमस्त्येव न नास्तीति सामान्यस्वरूपसिद्धे. सैव प्रमाणमित्यवधारणाच्च तद्गम्य-

चोदना इति क्रियायाः प्रवर्तकं वचनमाहुः। आचार्यचोदितः करोमीति हि दृश्यते। लक्ष्यते येन तल्लक्षणम्। धूमो लक्षणमग्नेरिति हि वदन्ति। तया यो लक्ष्यते सोऽर्थः पुरुषनिःश्रेयसेन संयुनक्तीति प्रतिजानीमहे॥

चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टं इत्येवंजातीयकमर्थं शक्नोत्यवगमयितुम्। नान्यत्किंचनेन्द्रियम्॥

स्याग्निहोत्रादे धर्मत्व, न चैत्यवन्दनादेरतद्रूप्यत्वादिति धर्मविशेषसिद्धेश्च द्विविधाऽपि द्वितीया विप्रतिपत्तिरुपशमितेति सूत्रस्य भावः॥

चोदनेति॥ कि केन कथमित्यपेक्षिते. साध्यसाधनेतिकर्तव्यतांशैः पूर्ण. लिङादिप्रत्यय. पुरुषप्रवर्तने समर्थः। तत्पूरण च वाक्येन। अतो वाक्यमेव प्रवर्तक चोदनोच्यते। तदेतच्चोदनापद लक्षणया शब्दप्रमाणमात्रपरं, न तु विधायकरूपशब्दविशेषपर, यतः भूत भविष्यन्तम् इत्युत्तरभाष्ये भूतार्थादिविषयकत्वमभिधीयते। लक्षणपदं व्याख्याति— लक्ष्यते इति॥

अथ संभावितो हि प्रतिज्ञातोऽर्थः हेतुना साध्यते। शब्दस्य च नित्यं प्रमाणान्तरपरतन्त्रस्य स्वातन्त्र्येण प्रामाण्य प्रत्यक्षादेश्च स्वतन्त्रस्याप्रामाण्यमिति द्वय प्रतिज्ञात चोदनैव प्रमाणमेवेति। तदिदमवधारणद्वयं असभावितार्थ इति मन्वानं प्रति सभावनापदलाभार्थं युक्तिमाह— चोदना हीत्यादिना॥ ज्ञानोत्पादहेतुत्वं प्रामाण्यहेतु। सति तस्मिन् उत्सर्गत प्राप्त प्रामाण्य अपवादभूतदोषाभावात् अनपोदितं भवतीति शब्द एव स्वतन्त्र धर्मे प्रमाण नान्यदिति भाव'। नान्यत्किंचनेन्द्रियमित्यनुमानादेः प्रदर्शनार्थम्॥

ननु तथाभूतमप्यर्थं ब्रूयाच्चोदना। यथा यत्किंचन लौकिकं वचनम्—नद्यास्तीरे पञ्च फलानि सन्तीति। तत् तथ्यमपि भवति वितथमपि भवतीति॥

उच्यते—विप्रतिषिद्धमिदमभिधीयते—ब्रवीति, वितथं चेति। ब्रवीतीत्युच्यते अवबोधयति बुध्यमानस्य निमित्त भवतीति। यस्मिंश्च निमित्तभूते सति अवबुध्यते सोऽवबोऽधयति। यदि च चोदनायां सत्यां अग्निहोत्रात्स्वर्गो भवतीति गम्यते, कथमुच्यते न तथा भवतीति। अथ न तथा भवतीति, कथमुच्यते असन्तमर्थमवबुध्यत इति विप्रतिषिद्धम्॥

अथ वक्तृप्रामाण्याधीनं शब्दप्रामाण्यं, वेदे वक्तृसत्त्वे सन्देहः, असत्त्वे सुतरामित्यभिप्रायेणाशङ्कते—नन्विति। अयमत्र संग्रहः—

स्वर्गयागादिसंबन्धविषया चोदना मृषा।
प्रत्यक्षाद्यगतार्थत्वात् चैत्यवन्दनवाक्यवत्॥
यद्वाऽऽप्तेनाप्रणीतत्वात् बालोन्मत्तादिवाक्यवत्।
वाक्यत्वाद्वा पौरुषेयवाक्यवच्चेति चाशयः॥

प्रामाण्यस्य स्वतस्त्वाभिप्रायेण परिहरति—उच्यते विप्रतिषिद्ध-मिति॥ ब्रवीति वितथं चेति॥ बोधयति न बोधयतीति च विप्रतिषिद्धमित्यर्थः। अयमाशयः—यदि ज्ञानस्य स्वविषयतथात्वावधारणे स्वतः शक्तिर्न स्यात् तदा नान्येनापि शक्यते संपादयितुम्। अतो न कदाचित्कस्यचित्कश्चिदप्यर्थोऽवधार्येतेत्यान्ध्यमेवाशेषस्य जगतः प्रसज्येत। विषयतथात्वमेव ज्ञानस्य प्रामाण्यम्। तन्निबन्धनत्वात् ज्ञाने प्रमाणबुद्धिशब्दयोः। तच्च ज्ञानकारणमात्रायत्तम्। अत एव पीत-शङ्खादिज्ञाने शङ्खादिकं सत्यं, दोषनिमित्तं पीतादिकम्। तस्मात्स्व-

कारणतस्सत्यविषयकत्वं दोषतश्चासत्यविषयकत्वं युक्तमित्युत्पत्तौ स्वतः प्रामाण्यम्, परतश्चाप्रामाण्यमिति ॥ उक्तं च—

तस्माद्बोधात्मकत्वेन बुद्धेः प्राप्ता प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ इति ॥

वेदे तु पुरुषाभावादेव निराश्रयत्वाद्दोषाणामभाव इत्यौत्सर्गिकं प्रामाण्यमनपोदितम् । एतेन सुतरामप्रमाणत्वं वक्तृप्रामाण्यविरहादिति शङ्काऽपास्ता ॥

प्रमाणं चैतत् विनैवात्मग्रहणेन संस्थितं अर्थपरिच्छेदकरणात् कृतव्यवहारकार्यं भवति । एतदुक्तं भवति—ज्ञप्तावपि विषयतथात्वलक्षणं प्रामाण्यं न ज्ञानसंबन्धित्वेन स्वत एव गृह्यते इति ब्रूमः । किन्तु अज्ञातादेव ज्ञानात् स्वत एव गृहीतं भवति । अतः गुणं संवादं अर्थक्रियां वा नापेक्षते इति ॥

अप्रमाणं तु स्वीयमप्रामाण्यं अर्थान्यथात्वलक्षणं न स्वतोऽवगमयितुमलम्, किं तु अविद्यमानमेव प्रामाण्यं गृह्णत् तन्निमित्तं व्यवहारं प्रवर्तयति । रजतज्ञानं हि शुक्तिकाशकलं रजतमित्येव गृह्णाति । न पुनर्नेदं रजतमिति । अतोऽप्रामाण्यं परत इति युक्तम् । तच्च परं बाधकज्ञानं क्वचित् स्वारसिकं, कारणदोषज्ञानाधीनं क्वचित् यौक्तिकम् । तावतैव कारणद्वयेन ज्ञानानामप्रामाण्यं गृह्यते नान्यथेति विश्वजनीनसंवित्सिद्धम् ॥

एतादृशकारणद्वयावगतं मिथ्यात्वं परेभ्यः प्रतिपादयता वादिनाप्येतत् द्वयमेव वदितव्यम्, न तु यत्किंचित्साधर्म्यमात्रेण प्रत्यक्षाद्यनवगतार्थत्वं अनाप्तप्रणीतत्वं वाक्यत्वादिकं वा, व्याप्तिविरहात् । एतेन पूर्वोक्तमनुमानजातं व्याप्यत्वासिद्धमित्युक्तं भवति । आगम-

**नच "स्वर्गकामो यजेत" इत्यतो वचनात् संदिग्धमवगम्यते भवति वा स्वर्गो नवा भवतीति। न च निश्चितमवगम्यमानमिदं मिथ्या स्यात्। यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्ययः। न चैष कालान्तरे पुरुषान्तरे अवस्थान्तरे देशान्तरे वा विपर्येति, तस्मादवितथः॥**

विरुद्धं बाधितकम्, यथा—आगमश्च स्वत प्रमाणमित्यस्मन्मतम्, अस्मत्प्रतिपादनार्थं च साधनरचन, न हि वयमागमबाधित अनुमानेन शक्या प्रतिपादयितुमित्यतोऽनुमानस्यागमेन बाधः॥

बौद्धाद्यागमास्तु न वेदतुल्या भवितुमर्हन्ति। न ह्यतीन्द्रियार्थे पुरुषस्य शक्तिरस्ति प्रत्यक्षाद्यसंभवात्। तेन भ्रमप्रमादालस्याशक्तिरूपपुरुषदोषसंभावनामूलतया दुष्टत्वात् औत्सर्गिकमपि प्रामाण्यमपोद्यते। वेदस्य त्वपौरुषेयतया न तादृशदोषसंभावनेति प्रमाणताऽनपोदितेति वैदिकस्सिद्धान्तः। अयमत्र सारः—

कर्ता तस्य गुणाश्चैव महाजनपरिग्रहः।
इत्याद्यप्रामाणिकार्थाः कल्प्यास्स्युस्सर्ववादिभिः॥

मीमांसकैः पुनः किंचिददृष्टं नात्र कल्प्यते।
इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते॥ इति॥

अत्राप्रामाण्यं मिथ्यात्वलक्षणं त्रेधाऽभिमतम्—संशयो विपर्ययः ज्ञानानुदयश्चेति। तत्र ब्रवीति वितथं चेत्यादिना अनुदयलक्षणमप्रामाण्यं निराकृतम्। न च स्वर्गेत्यादिना संशयलक्षणं, न च निश्चितमित्यादिना च विपर्ययलक्षणं निराकरोति। दोषसंशयात्प्रामाण्यसंशयः दोषनिश्चयाच्च विपर्ययः। तदुभयं दोषनिवारणेन निवारितमिति भावः॥

यत्तु लौकिक वचनं तच्चेत् प्रत्ययितात्पुरुषात् इन्द्रियविषयं वा अवितथमेव तत्। अथाप्रत्ययितादनिन्द्रियविषयं वा तत् पुरुषबुद्धिप्रभवं अप्रमाणम्। अशक्यं हि तत्पुरुषेण ज्ञातुमृते वचनात्। अपरस्मात्पौरुषेयाद्वचनात्तदवगतमिति चेत् तदपि तेनैव तुल्यम्। नैवजातीयकेष्वर्थेषु पुरुषवचनं प्रामाण्यमुपैति। जात्यन्धानामिव वचनं रूपविशेषेषु ॥

अथ "यथा यत्किंचन लौकिकं वचनम्" इति दृष्टान्त दूषयति–यत्त्वित्यादिना ॥ प्रत्ययितत्व यथादृष्टार्थवादित्वं, इन्द्रियविषयत्व संभवत्प्रत्यक्षमूलत्वम्। इन्द्रियग्रहण अनुमानादीनामपि मूलप्रमाणानामुपलक्षणम्। वचनस्यैवेद विशेषणम्। वाशब्दस्समुच्चये। तथा च यत्संभवन्मूलप्रमाण प्रत्ययितवचन तत्प्रमाणमेव। अतो यदि तदभिप्रायं दृष्टान्तवचन तदा साध्यवैकल्यम्। यच्चाप्रत्ययितवचनं असंभवन्मूलप्रमाणं तत्पुरुषबुद्धिप्रभव मूलदोषेण दुष्टत्वादप्रमाणम्। अत्र तु वाशब्दो विकल्पार्थे। नैतद्दृष्टान्तेनादुष्टस्य वेदस्याप्रामाण्यं विरुद्धत्वात् दृष्टान्तस्येति। तथाचातीन्द्रियेऽर्थे निर्दोषवचनमन्तरेण नावगतिरित्याह–अशक्यं हीति ॥

केचित्तु—प्रत्ययितत्वं यथावस्थितार्थदर्शित्व यथादृष्टार्थवादित्व च। इन्द्रियविषयत्वं तु अनाप्तवाक्यत्वेऽपि श्रोतुरिन्द्रियविषयीभूतार्थविषयकत्वम्। वाशब्दश्च विकल्पार्थ इत्याहुः। तदयुक्तम्––अत्र आप्तत्वैन्द्रियकत्वयोरेकैकस्यैव प्रामाण्यकारणत्वेनाश्रयणात् एकैकाङ्गवैकल्यमेव अप्रामाण्यकारणत्वेन प्रत्युदाहरणेऽपि समाश्रयितव्यम्। एवं चाप्रत्ययितादित्युच्यमाने प्रत्युदाहरणे श्रोतुरिन्द्रियविषयं यदप्रत्ययितवाक्यं प्रमाणत्वेनोदाहृतं तदेवेदानीं अप्रमाणत्वेन प्रत्युदाहरणं स्यात्,

**ननु विदुषामुपदेशो नावकल्पते, उपदिष्टवन्तश्च मन्वादयः। तस्मात्पुरुषास्सन्तो विदितवन्तश्च। यथा चक्षुषा रूपमुपलभ्यते इति दर्शनादेवावगतम् ॥**

तथा इन्द्रियविषयं वेत्यस्य प्रत्युदाहरणे तु अनिन्द्रियविषयं वेत्युच्यमाने यदाप्तवाक्यमपि श्रोतुरनिन्द्रियविषयं प्रमाणत्वेनाभ्युपगत तदेवाप्रमाण-त्वेन प्रत्युदाहरणं स्यादिति ग्रन्थव्याघात' स्यात् ॥

किंच–प्रत्ययितशब्दः इतजन्तः प्रत्ययोऽस्य सजात इति। प्रत्ययश्चायथार्थोऽपि सभवति। अतो न यथार्थदर्शी प्रत्ययितः। किंतु यथादृष्टार्थवाद्येव। तस्मात् यथादृष्टार्थवादितारूपसत्यता प्रत्यायितपदेनोक्ता। इन्द्रियविषयमित्यनेन तस्यैव मूलसद्भाव' विशेषण मुच्यत इति युक्तम् ॥

केचित्तु "अशक्य हि तत् पुरुषेण ज्ञातुमृते वचनात्" इति भाष्य सर्वज्ञनिराकरणपरतया व्याचक्षते। तदयुक्तम्—वचनादृते ज्ञातु-मशक्यमिति वदन् अवाचनिके अतीन्द्रियेऽर्थे ज्ञानशक्ति निराकरोति न सर्वत्र। प्रकृतत्वादतीन्द्रियमेव तच्छब्देन परामृश्यते। किंच यो हि षड्भि प्रमाणैस्सर्वं जानाति स धर्माधर्मावपि वेदेन जानन् चोदने-त्यवधारण न विरुणद्धीति न निराकर्तव्यः। यस्तु एकेनैव प्रमाणेन सर्व विजानातीति कैश्चित्कल्पित, यथा बुद्धश्चक्षुषैव सर्वं जानातीति। सोऽतितुच्छत्वात् न तरा निराकर्तव्य इति। सर्वज्ञवादस्तु विस्तरेण मदीये मानमेयरहस्यश्लोकवार्तिकेऽनुसधेय. ॥

अथ मनुबुद्धादीनामतीन्द्रियधर्मसाक्षात्कारेऽर्थापत्तिमनुमान वाऽऽ-शङ्क्य समाधत्ते–नन्वित्यादिना ॥ उपदेशान्यथानुपपत्त्याऽतीन्द्रियार्थस्यापि दर्शनीयत्व कल्प्यत इत्यर्थापत्तिः। मन्वाद्युपदेशस्साक्षात्कारपूर्वकः

उच्यते—उपदेशा हि व्यामोहादपि भवन्ति। असति व्यामोहे वेदादपि भवन्ति॥

अपिच पौरुषेयाद्वचनात् एवमयं पुरुषो वेदेति भवति प्रत्ययः। नैवमयमर्थ इति। विप्लवते हि खल्वपि कश्चित् पुरुषकृताद्वचनात्प्रत्ययः। न तु वेदवचनस्य मिथ्यात्वे किंचन प्रमाणमस्ति॥

उपदेशत्वात् वैद्योपदेशवदित्यनुमानम्। सन्त पुरुषाः विदितवन्त. धर्मं साक्षात्कृतवन्त. इत्यर्थ॥

अथार्थापत्तेरन्यथोपपत्तिः, अनुमान बालोन्मत्ताद्युपदेशेन व्यभिचारितमित्यभिप्रेत्यसमाधत्ते—उच्यते इति॥ उपदेशमूल व्यनक्ति—असतीति॥

एवं पुरुषवचनादर्थे निश्चयो जात· परिनिष्ठितोऽपि प्रत्यक्षादिवन्मूलदोषावगमेन बाध्यत इति बुद्धादिवचसामप्राण्यमुक्तम्। इदानीं मूलावधारणद्वारेणैव निश्चयः प्रतितिष्ठतीति बुद्धादिवचसामसंभवन्मूलानां प्रामाण्यसंभावनैव नास्तीति वक्तु वेदस्य तु मूलानपेक्षत्वात् प्रतिष्ठित प्रामाण्यमित्युपपादयितुं चाह—अपिचेत्यादिना॥ नैवमयमर्थ इति॥ प्रत्यय. अर्थे न प्रतितिष्ठतीति यावत्। विप्लुतिः भ्रान्तिः सशयो वा। सामान्येन मूलज्ञानावधारणशक्तिं अनाप्तवाक्ये चापवादं वदता पुरुषवचसां द्वे शक्ती दर्शिते—मूलज्ञानद्वारेणैव प्रामाण्यमप्रामाण्य वेति। मूलज्ञानावधारणं त्वित्थम्—वाक्यार्थप्रत्ययः पदपदार्थरचनाधीनः रचना च विवक्षाधीना सा च ज्ञानाधीनेत्यानुमानिकम्। एव च "ननु तथाभूतमप्यर्थम्" इति यत्पुवचन साधर्म्यादप्रामाण्यमुक्त तद्वैधर्म्यात्परिहृतमिति वेदितव्यम्। निगमयति

ननु सामान्यतो दृष्टं पौरुषेयं वचन वितथमुपलभ्य वचन-साम्यादिदमपि वितथमवगम्यते ॥ न, अन्यत्वात् । न ह्यन्यस्य वितथभावेऽन्यस्य वैतथ्य भवितुमर्हति, अन्यत्वादेव । न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति ॥

अपिच पुरुषवचनसाधर्म्यात् वेदवचनं वितथमित्यनुमान, प्रत्यक्षस्तु वेदवचनेन प्रत्यय । न च प्रत्यक्षविरुद्धमनुमानमात्मानं लभते ॥

न तु वेदेति ॥

अथ—"तत्पुरुषबुद्धिप्रभवमप्रमाणम्" इति वदता दोषनिमित्त लौकिकवाक्यस्याप्रामाण्य न वाक्यत्वप्रयुक्तमिति दर्शितमपि दोषो मिथ्यात्वे तदभावश्च सम्यक्त्वे हेतुरनेनोक्त इत्येतावन्मात्रं ज्ञात्वा वाक्यत्वस्याप्रयोजकत्वाभिप्रायमज्ञात्वा भवतु तावत् येनकेनचिद्धेतुना लौकिकस्याप्रामाण्य तावताऽपि तत्प्रतिबद्ध वाक्यत्वं वेदस्यापि मिथ्यात्वमनुमापयतीत्याशङ्क्य समाधत्ते—ननुसामान्यत इत्यादिना ॥

नान्यत्वादिति ॥ अयं भाव·—मर्त्येषु वैद्योपदेशेषु व्यभिचारः । यदि अतीन्द्रियविषयत्वे सति वाक्यत्वादित्युच्यते तदा केन चिद-तीन्द्रियविषयमेव वाक्य "इन्द्रोऽस्तीति" प्रयुक्त, अपरेण "नास्तीति" तत्रान्यतरदवश्य सत्यमिति तत्र व्यभिचारः ॥ नहि देवदत्तस्येति ॥ पुस्त्वेन श्यामत्वे साध्ये व्यभिचार इति भावः ॥

अथ विशेषविरुद्धत्व हेतो कथ्यते—अपिच पुरुषेति ॥ प्रत्यक्षस्त्विति ॥ बाधकाधीनेन हि मिथ्यात्वेन व्याप्तं वाक्यत्व तादृशमेव साधयेत्, न च तद्वेदे शक्यं साधयितुम् । वेदजनित· प्रत्यय. न कदाचिद्बाध्यत इत्यबाधितत्वेन प्रत्यक्षतुल्यत्वात् प्रत्यक्ष इत्युच्यते ॥

तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः। एवं तर्हि श्रेयस्करो जिज्ञासितव्यः किं धर्मजिज्ञासया। उच्यते—य एव श्रेयस्करस्स एव धर्मशब्देनोच्यते। कथमवगम्यताम्? यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते। यश्च यस्य कर्ता स तेन व्यपदिश्यते। यथा पाचको लावक इति। तेन यः पुरुषं निश्श्रेयसेन संयुनक्ति स एव धर्मशब्देनोच्यते। न केवलं लोके, वेदेऽपि "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्" इति यजतिशब्दवाच्यमेव धर्मं समामनन्ति॥

द्रव्यादीनामपि धर्मत्व वक्तुमुपसंहरति—तस्मादित्यादिना॥ धर्म इत्यनुक्त्वा श्रेयस्करशब्द प्रयुञ्जानेन अनयोः पर्यायता यागादेरेव धर्मतोपदर्शिता, नापूर्वादेरिति। तत्र लोकप्रयोग प्रमाणमुपदर्शयति-यो हीति॥ वैदिकादपि सामानाधिकरण्यात् यागादेरेव धर्मतामाह—न केवलमिति॥ तच्छब्दो यज्ञपरः प्रकृतत्वात्। पुंलिङ्गैकवचनान्तेन नपुंसकबहुवचनान्तस्य सामानाधिकरण्यानुपपत्तिस्तु व्यत्ययस्य छान्दसत्वेन प्रातिपदिकमात्राभिप्रायेण वाऽपास्ता भवति॥

अत्र यागादीनामेव धर्मशब्दवाच्यत्वनिरूपण मतान्तरनिरासाभिप्रायेण। तानि मतान्तराणीमानि—सांख्या ह्यन्तःकरणस्य वृत्तिविशेषं यागाद्यनुष्ठानजन्य धर्ममाहु। शाक्यास्तु चेतसो ज्ञानस्य ज्ञानान्तरजन्या वासनाम्। आर्हतास्तु कायारम्भकान् पुद्गलान् परमाणून्। वैशेषिकास्तु—आत्मनो विशेषगुणम्। एकदेशिनस्त्वपूर्वम्। इत्यादि॥

सर्वेषु च तेषु लोके धर्मशब्दप्रयोगा न दृष्ट इति न तेषां धर्मता। अपूर्वं पुनर्नाम स्वतन्त्रं न वस्त्वास्ति। अपि तु फलं साधयितुमभिप्रवृत्तस्य यागादेः शक्तिमात्रम्। उत्पत्तौ वा प्रवृत्तस्य फलस्य

**उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्चेति । कोऽर्थः? यो निःश्रेयसाय ज्योतिष्टोमादिः । कोऽनर्थः? यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः । तत्रानर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम् । कथं पुनरसावनर्थः? हिंसा हि सा, हिंसा च प्रतिषिद्धेति ॥**

पश्चादेस्सूक्ष्मावस्था शक्तिरङ्कुरस्थानीया. ततः न पृथग्भूतं वस्त्वन्तरम् । एतच्चापूर्वाधिकरणे स्पष्टम् ॥

अथार्थशब्दप्रयोजन कथयितुमाह–उभयमिहेत्यादिना ॥ उभय विधेय प्रतिषेध्य चेति द्वयमित्यर्थ । अत्राय विचारः—क्रियाया· प्रवर्तक वचन चोदनेति वदता क्रियाविधावेव चोदनाशब्दो व्यवस्थापित । अत एव "आम्नायस्य क्रियार्थत्वात्" इत्यत्राम्नायपदमपि धर्मप्रमाणभूतचोदनापर वक्तव्यम् । निषेधेषु यदि तावन्निवारण नाम विध्यन्तर वाक्यार्थः, यदि वा नञर्थविधि, उभयथापि क्रियाविधित्वाभावः । ततश्च हिंसासुरापानादेः अनर्थस्य चोदनालक्षणत्वविरहादेव व्यावृत्तिसिद्धे· नार्थग्रहणप्रत्युदाहरणत्वमिति शङ्का ॥

समाधानं तु–प्रवर्तक निवर्तकं च वाक्य चोदना । न केवलं प्रवर्तकमेव । क्रियाया· प्रवर्तकमिति पूर्वभाष्यं तु अर्थशब्दसहितचोदनाशब्दस्यार्थकथनपरम् । अथवा धर्मप्रमाणभूतचोदनाशब्दस्य । ततश्च यदोभयमपि चोदना तदा तयैव विधिरूपया विधेयानामर्थत्व निषेधरूपया निषेध्यानामनर्थत्व लक्ष्यते । तत्र निषेध्यस्यानर्थस्य धर्मत्वव्यावर्तनेन विधेयस्यैवार्थस्य धर्मत्वं वक्तु अर्थवदेवार्थग्रहणमिति । ततश्चार्थस्य धर्मत्वे सूत्रिते तद्विपरीतस्यानर्थस्य अधर्मत्वमर्थसिद्धमिति न सूत्रितम् । तथापि हानाय जिज्ञासितव्य एवानर्थः अधर्मः । अत

कथं पुनरनर्थः कर्तव्यतयोपादिश्यते? उच्यते—नैव। श्येनादयः कर्तव्या विज्ञायन्ते। यो हि हिंसितुमिच्छेत् तस्यायमभ्युपाय इति हि तेषामुपदेशः। "श्येनेनाभिचरन् यजेत" इति हि समामनन्ति। नाभिचरितव्यमिति॥

एव केचित् "अथातोऽधर्मजिज्ञासा" इत्यकारप्रश्लेषेणाधर्मस्यापि प्रतिज्ञां व्याचक्षते॥

कोऽनर्थ इति॥ अत्र यद्यपि अनर्थोदाहरण श्येनादिकमुक्त, तच्च विहितत्वेन नानर्थमिति शङ्कोदेति। तथापि आभिलषिततमस्य शत्रुवधस्य फलस्य साध्यमानत्वात् फलगतमनर्थत्व साधनेऽप्युपचर्यते। अथवा श्येनपद शत्रुवधपरमिति युक्तमुदाहरणम्। ततश्च हिंसा हि सेत्युत्तरभाष्यमपि सुसगत भवति॥

यद्वा—प्रवर्तकमेव चोदना। तया चोभय साध्य साधन च लक्ष्यते। तत्र साध्यमपि द्विविध अर्थोऽनर्थश्चेति। कोऽर्थ इत्यत्रार्थशब्दः साधनपर। अर्थात्मकस्य फलस्य साधकमित्यर्थः। स च ज्योतिष्टोमादिः। कोऽनर्थ इति तु फलस्वरूपाभिप्रायमेव। स च श्येनादिः शत्रुवधरूपफलमित्यर्थ। तत्रानर्थस्य हिंसादेः धर्मत्वव्यावर्तनेन ज्योतिष्टोमादेर्धर्मत्व वक्तु अर्थग्रहणमिति। एव च अर्थात्मकफलसाधनस्य धर्मत्व अनर्थात्मकस्य हिंसादेः अधर्मत्वं चोक्त, अनर्थात्मकफलसाधनस्यश्येनादेस्तूभयं नोक्त, अतोऽसौ न धर्मः नापि स्वरूपेणाधर्म इति सिद्धं भवति॥

फलस्याविधेयत्वमजानतां उभयमित्यादिना फलस्यापि चोदनालक्षणत्वाभिधानात् विधेयत्वमस्तीति भ्राम्यता अनर्थत्वाक्षेपं तस्य समाधानं चाह—कथं पुनरनर्थ इत्यादिना॥ अत्र समाधानभाष्य

उच्यते नैवेति ॥ कर्तव्यतयोपदिश्यते इत्यनुषज्यते । किं तर्हि विधेयमित्यत उत्तरं-- श्येनादय इति ॥ अत्र नैवेति वाक्यभेदाकरणे फलस्य विधेयत्वे चोदिते श्येनस्य निवारणमसंगतं स्यात् । तेषामुपदेश इति ॥ श्येनादीनामेव विधेयत्वमित्यर्थः । फलस्य न विधेयत्वमित्याह— श्येनेनाभिचरन्निति ॥ लक्षणे शतृ वृत्तिं दर्शयन् लक्षणस्य प्रसिद्धत्वात् अविधेयत्वमभिचारस्य दर्शयति । अभिचारो हिंसा । अनेन फलस्यैव पूर्वग्रन्थे विधेयत्वं निराकर्तुमिष्टं न श्येनादीनामिति स्पष्टम् ॥ नाभिचरितव्यमिति ॥ अभिचारस्य अनर्थस्य न विधिरिति निगमनम् ॥

एवं च चोदनालक्षणत्वाद्वा भावनान्तर्गतत्वाद्वा विधिप्रमेयं यत् तद्विधेयमिति न विधेयलक्षणम् । किंतु यत्राप्रवृत्तः पुरुषो विधिवशात्प्रवर्तते तद्विधेयमिति । ततश्च श्येनादिर्विधेयोऽपि फलद्वारेणानर्थ इत्यधर्म इत्युपचर्यते ॥

अयमत्र निष्कर्षः—अनिष्टाननुबन्धीष्टसाधनत्वं धर्मपदप्रवृत्तिनिमित्तं चेत् श्येनो न धर्मः । चोदनागम्यत्वे सतीष्टसाधनत्वं तथा चेत् धर्मः श्येनः । चोदनागम्यत्वे सति साक्षात्परंपरया वा अनिष्टसाधनत्वमधर्मपदप्रवृत्तिनिमित्तं चेत् श्येनोऽप्यधर्म इति ॥

किंच—यथा सामान्यस्याहवनीयविधेः शवस्पर्शनिषेधस्य च वर्त्महोमविधिना पुरुषशीर्षोपधानविधिना च बाधो वक्ष्यते तथा हिंसानिषेधोऽपि सामान्यरूपः विशेषेणाग्नीषोमीयादिक्रत्वर्थविधिना श्येनेनाभिचरन्नित्यादिपुरुषार्थविधिना च बाध्यते इति ध्येयम् ॥

अपरे तु तत्रापि हिंसायामनर्थत्वं अनुमिन्वन्ति । यथा— हिंसा स्वविषयदुःखसमानदुःखं कर्तुः कालान्तरे जनयति क्रियाविशेषत्वात् । दानं हि स्वविषये संप्रदाने यादृक्सुखं तादृगेव कर्तुर्जनयतीति ॥ तदयुक्तम्—गुरुदारगमनसुरापानादिना व्यभिचारात् ॥

दृष्टान्तोऽपि साध्यविकल सम्प्रदानस्य स्वल्प सुख कर्तुश्च महत् "समद्विगुणमहस्रानन्तानि फलानि" इति स्मृते । किंच सम्प्रदानतुल्यफलत्व सपक्षे । कर्मकारकतुल्यफलत्व पक्षे । विषयशब्दमात्र त्वेकम् । अपिच अग्नीषोमीयहिंसा सुखकरी चोदितत्वाज्जपादिवदिति विरुद्धाव्यभिचारिता । तस्मादनुग्रह पीडा चापास्य विधिनिषेधावेव धर्माधर्मार्थिभिराश्रयितव्याविति ॥

अन्येतु ज्ञापक शास्त्र न तु कारक, अतश्शास्त्र वस्तुशक्तीनामावापोद्वापौ न करोति । विद्यमानशक्तिकथनमात्रे व्यापारात् । एकैव हि हिंसा, तस्या प्रत्यवायनिमित्तत्वशक्ति निषेधेन बोधिता पुनर्विधानादपि नापगच्छति । अतश्शास्त्रानुसारादेव अग्नीषोमीयहिंसाया अधर्मत्वमिति ॥ तदप्यसङ्गतम्—शूद्रस्य सुरापानादिना नरकापातात्, ब्राह्मणक्षत्रिययोः वैश्यस्तोमादियागादिना स्वर्गापातात् । भोजनक्रियायाश्चैकत्वेन स्वस्थातुरयोरविशेषप्रसङ्गात् । यद्यत्र क्रियाव्यक्तिभेदात् व्यवस्था, हिंसायामपि तुल्यैवैषा दिगिति ॥

ननु विहिताऽपि हिंसाऽनर्थहेतुरिनि मन्त्रार्थवादेतिहासपुराणादिभ्योऽवगम्यते । तथाहि—

यत्पशुर्मायुमकृतोरो वा पद्भिराहते ।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस. ॥ इति

संज्ञपनकालिको मन्त्र । तदर्थस्तु मारणकाले पशु मायु स्योमिति ध्वनिं यदकृत पद्भिः उरस्थलं यदाहते ताडयामास, तस्मादेनस. मामग्निः मुञ्चतु मोचयतु । तथा विश्वात् तादृशात्सर्वस्मादप्यंहस मोचयत्विति । एतेन मन्त्रेण संज्ञपनात्पापमवगम्यते । तथा—"जर्तिलयवाग्वा जुहुयात् गवेधुकयवाग्वा वा जुहुयात् न ग्राम्यान् पशून् हिनस्ति नारण्यान्" इत्यर्थवादः ॥ जरत्तिला जर्तिला. ॥

नन्वशक्तमिदं सूत्रं इमावर्थावभिवदितुम् । चोदनालक्षणो धर्मः नेन्द्रियादिलक्षणः । अर्थश्च धर्मः नानर्थ इति । एकं हीदं वाक्यम्, तदेवं सति भिद्यते । उच्यते—यत्र वाक्यादर्थोऽवगम्यते तत्रैवं, तत्तु वैदिकेषु । न सूत्रेषु, अन्यतोऽवगतेऽर्थे सूत्रमेवमर्थमिदमित्यवगम्यते । तेन चैकदेशः सूत्र्यत इति सूत्रम् । तत्र भिन्नयोरेव वाक्ययोः इमावेकदेशावित्यवगन्तव्यम् ॥

अथवा—अर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यत इति एकार्थमेवेति ॥

तथा भगवद्गीता—श्रेयान् द्रव्यमयात् यज्ञात् ज्ञानयज्ञः परन्तप॥ इति॥

मनुवचनं च—विधियज्ञात् जपयज्ञो विशिष्टो दशभिर्गुणैः ॥ इति ॥

अत्र हिंसासंबन्धादेव द्रव्ययज्ञविधियज्ञनिन्दा इति चेन्न—“अग्नीषोमीयं पशुमालभेत” इत्यादिकया श्रुत्या हिंसाया विहितत्वात् तद्विरुद्धत्वादेषां वचनानां अर्थवादमात्रत्वात् इति दिक् ॥

अस्मिन् सूत्रे वाक्यभेदरूपं दोषमाशङ्क्य परिहरति—नन्वशक्तमित्यादिना ॥

अन्यतोऽवगतेऽर्थे इति ॥ व्याख्यातॄणामिति शेषः । शिष्यान् प्रति तु अन्यतोऽनवगतार्थत्वात् । भिन्नयोरेव वाक्ययोरिति ॥ अत्र सूत्रद्वयमेव कल्पितम्—चोदनालक्षण इत्येकं सूत्रं, अर्थो धर्मः इत्यपरम् । प्रथमस्य साकाङ्क्षत्वात् अनन्तरसूत्रगतो धर्मशब्दः अन्तर्नीतार्थ एवानुषज्यते । ततश्चानर्थस्यापि धर्मत्वं व्यावर्तितम् । द्वितीयेऽपि चोदनालक्षणपदमनुषज्यते, ततश्चार्थोऽपि चोदनालक्षणत्वविशिष्ट एव न त्वविशिष्ट इति सिद्धं भवति ॥

वाक्यभेददोषविनाकृतं व्याख्यान्तरमाह अथवेति ॥ यद्यप्येवं

**तस्य निमित्तपरीष्टिः ॥३॥**

**उक्तमस्माभिश्चोदनानिमित्तं धर्मस्य ज्ञानमिति । तत् प्रतिज्ञामात्रेणोक्त, इदानीं तस्य निमित्तं परीक्षिष्यामहे किं चोदनैवेति अन्यदपीति । तस्मान्न तावन्निश्चीयते चोदनालक्षणोऽर्थो धर्म इति ॥**

**तदुच्यते—सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥४॥**

विशिष्टानुवादेऽपि वाक्यभेदोऽस्त्येव । अनुवाद्यांशस्यान्यतोऽसिद्धेः । तथापि अर्थस्य सत इति न विशिष्टानुवाद , किं तर्हि नित्यानुवादः । ततश्चाय भाष्यार्थः—अर्थस्य सतो ग्रद्धर्मत्व तच्चोदनालक्षणस्येत्युच्यते इति॥

तस्य धर्मस्य निमित्त ज्ञापक तस्य परीष्टिः परीक्षा प्रस्तोतु अर्हति शेषः, इति सूत्रार्थः । आक्षेपसंगत्या सूत्रमवतारयति— उक्तमित्यादिना ॥

यद्यप्यत्र "चोदना हि भूतम्" इत्यादिना युक्तिरपि दर्शिता न प्रतिज्ञामात्रम् । तथापि भाष्यकारेण युक्तिरुक्ता न सूत्रकृतेत्यदोषः । केचित्तु—प्रतिज्ञातार्थस्य साधनाय युक्तिरुपरिष्टाद्वक्ष्यते । चोदना हि भूतमित्यादिग्रन्थस्तु प्रतिज्ञातार्थस्य सभवप्रदर्शनपरं न तु साधनप्रदर्शनपरम्, इत्याहुः । तदानीं स्वाभिप्रायेणाप्युपपन्नं प्रतिज्ञामात्राभिधानमिति ॥

अत्र चोदनैव प्रमाणमेव इत्यवधारणद्वयवती प्रतिज्ञा । तत्र प्रथममवधारणं समर्थयति—सदिति ॥ पुरुषस्येन्द्रियाणा सति वर्तमाने संप्रयोगे यत् बुद्धे जन्म तत्प्रत्यक्ष, तादृश प्रत्यक्ष धर्मस्यानिमित्तं अप्रमापकम् । विद्यमानस्य सिद्धस्यैव वस्तुन इन्द्रियैरुपलम्भात्,

इति सूत्रशब्दार्थः ॥

यल्लोकप्रसिद्धं प्रत्यक्षं तस्य सत्सम्प्रयोगजत्वरूपधर्मयोगात् विद्यमानोपलम्भनत्वं, तेन धर्मं प्रत्यनिमित्तत्वमिति वचनव्यक्तिः । तदेते त्रयः प्रयोगाः —प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् । विद्यमानोपलम्भनत्वं च सत्सम्प्रयोगजत्वात् सत्सम्प्रयोगजत्वं च प्रत्यक्षत्वात् इति । अत्र वर्तमानवचनोऽयं सच्छब्दः संप्रयोगसमानाधिकरणः । निमित्तसप्तम्या वर्तमानात्सम्प्रयोगात् यत् ज्ञानं जायते इति लभ्यते । न तु भवदासादिमतानुरोधेन सता सम्प्रयोग इति सम्प्रयुज्यमानवचनः, भविष्यद्वृष्ट्यनुमाने मेघेन्द्रियसम्प्रयोगजे विद्यमानोपलम्भनत्वाभाववति व्यभिचारात् । समानाधिकरणयोजनायां सम्प्रयोगे लिङ्गज्ञानोत्पादनेन निवृत्तव्यापारे पश्चाल्लिङ्गज्ञानेनानुमितिर्जायते ।' न सा सत्सम्प्रयोगजनिता इति न व्यभिचारः ॥

अत्रानिमित्तत्वसंभावनापदं प्रत्यक्षं योगिप्रत्यक्षं विवक्षितम् । न तु सामान्यं, अस्मदादिप्रत्यक्षस्यैव दृष्टान्ततया वक्तव्यत्वात् । दृष्टान्तान्तरविरहात् । सामान्यस्य पक्षत्वे अस्मदादिप्रत्यक्षमादायांशतः सिद्धसाधनाच्च । योगिनां हि भावनाबलजं प्रत्यक्षं सकलातीतानागतसूक्ष्मादिविषयं धर्माधर्मावपि गोचरयतीति शाक्यादयो मन्यन्ते । स्वभावत एवात्मानस्सर्वज्ञाः । ते देहावरणेनावृतज्ञानाः किंचिदेवेन्द्रियादिवशेन जानन्ति । निर्मुक्तदेहावरणास्तु मुक्ताः सर्वमनागतादिकं जानन्तीत्यार्हताः । तद्दृष्ट्या सूत्रमिदं प्रवृत्तमिति ॥

भवदासेन तु एतत्सूत्रं द्विधा कृत्वा तत्प्रत्यक्षमित्येवमन्तं प्रत्यक्षलक्षणपरं, अनिमित्तमित्यादि च तस्य धर्मं प्रत्यनिमित्तत्वपरं व्याख्यातम् । तत्रैकवाक्यत्वे संभवति वाक्यभेदश्चैको दोषः ॥

**इदं परीक्ष्यते—प्रत्यक्षं तावदनिमित्तम् । किं कारणम्? एवंलक्षणकं हि तत् । सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म**

चोदनैवेति प्रतिज्ञाया प्रत्यक्षलक्षणाभिधानमसंगतमनुपयुक्तं चेत्यपरो दोष । किंच लक्षणं कथयन् किमित्यनुमानादेर्लक्षणं न कथयति । न हि तेषामप्रामाण्यम् । नापि प्रत्यक्षान्तर्भाव । तदनन्तर्भावादपि न लक्षणमप्येकम् । तस्मात् पृथक् लक्षणानि वक्तव्यानि । अकथनाच्च न लक्षणे तात्पर्यम् । यद्यपि प्रत्यक्षलक्षणकथनेनेतरेषा तत्पूर्वकत्वमिति लक्षणं सिद्धमिति वक्तु शक्यम् । तथापि यस्तु तेषामवान्तरभेद स्वरूप इयत्ता वा, न तत्सर्वं प्रत्यक्षलक्षणेन अवधार्यते ॥

अपिचेदं लक्षणं सत्सम्प्रयोजत्व भविष्यद्वृष्ट्यनुमानेऽतिव्याप्त, तद्धि सतैव लिङ्गादिना इन्द्रियसप्रयोगाज्जायते इति । अथ च सच्छब्दः सम्प्रयोगविशेषण इति चेत् पीतशङ्खादिविषयेषु प्रत्यक्षाभासे ष्वतिव्याप्तिः । न च ग्राह्येण सम्प्रयोगो लक्षण, तथा च वक्ष्यति वृत्तिकार. "यदाभास विज्ञानं तेन सप्रयोग" इति वाच्यम् । यत. सम्प्रयोगमात्रमिहोपात्त, न ग्राह्यविशेषणम् । अत एव वृत्तिकारेण तत्सम्प्रयोग इति पाठान्तरमुदाहृतम् ॥

ननु येनकेनचित्सम्प्रयोगस्य सर्वज्ञानसाधारणत्वात् तदुपादानमनर्थकं भूत्वा ग्राह्यविशेषण ज्ञापयतीति चेन्न - न ह्यनर्थकत्वमात्रेण वाचकमन्तरेण ग्राह्यविशेषणसिद्धिरित्यस्त्येवातिव्याप्ति । तस्मादस्मिन् सूत्रे लक्षणमनुपात्तत्वात् न शक्यं विधातुं अनुवदितु वेति । एतेन लक्षणानुवादेनानिमित्तपर सूत्रमिति ये मन्यन्ते तन्मतमप्यसगतमिति ध्येयम् ॥

स्वयं सूत्रस्यानिमित्तपरतामेव प्रतिजानाति—इदं परीक्ष्यत इत्यादिना ॥ इद परीक्ष्यते इति पूर्वसूत्रार्थानुवादः । एव लक्षणक हीति ॥

## ವಿಶೇಷ ಸೂಚನಾ

1 ಮಹಾಪಾರಶಾಲೆಯ ಪಂಚಾಶತ್ಸಂವತ್ಸರ ಮಹೋತ್ಸವದ ಜ್ಞಾಪಕಾರ್ಥವಾದ ಸಂಚಿಕೆಯು ಪ್ರತ್ಯೇಕ ಬಿಕರಿಗೆ ಸಿದ್ಧವಾಗಿದೆ ಸುಂದರವಾದ ಐದು ಭಾವಚಿತ್ರಗಳಿಂದಲಂಕೃತವಾಗಿ ಉತ್ತಮವಾದ ಕಾಗದದಲ್ಲಿ ಮುದ್ರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಉದ್ದಾಮ ಪಂಡಿತರಿಂದ ರಚಿತಗಳಾದ ಉಪನ್ಯಾಸಗಳಿಂದ ಭರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಸರ್ವರೂ ಗ್ರಹಿಸತಕ್ಕುದಾಗಿದೆ ಕೆಲವು ಪ್ರತಿಗಳು ಮಾತ್ರ ಉಳಿದಿರುವುದರಿಂದ ಇಷ್ಟವುಳ್ಳವರು ಶೀಘ್ರದಲ್ಲಿಯೇ ಕೆಳಗಿನ ವಿಳಾಸಕ್ಕೆ ಬರೆದು ಪಡೆಯಬಹುದು ಬೆಲೆ ಎಂಟಾಣೆ, ಅಂಚೆ ವೆಚ್ಚ ಎರಡಾಣೆ

2 ಇದುವರೆಗೂ ನಮ್ಮ ಪತ್ರಿಕೆಗೆ ಚಂದಾದಾರರಾಗುವುದರ ಮೂಲಕ ಪ್ರೋತ್ಸಾಹಕೊಟ್ಟ ಮಹನೀಯರಿಗೆ ಬಹಳ ಕೃತಜ್ಞರಾಗಿದ್ದೇವೆ ಮುಂದೆಯೂ ಹೀಗೆಯೇ ಸಹಾಯಮಾಡಿ, ಕ್ಷೀಣದಶೆಗೆ ಬರುತ್ತಿರುವ ಗೀರ್ವಾಣ ವಿದ್ಯೆಯನ್ನು ಕೈಲಾದಷ್ಟು ಉದ್ಧಾರಮಾಡಬೇಕಾಗಿ ಪ್ರಾರ್ಥನೆ

ಮುಂದಿನ ಅಂದರೆ ಏಪ್ರಿಲ್ ಸಂಚಿಕೆಯನ್ನು ವಿ ಪಿ ಮೂಲಕ ಕಳುಹಿಸಲಾಗುತ್ತೆ, ಆದರೆ ಅದಕ್ಕೆ ಮುಂಚೆಯೇ ಕೆಳಗೆ ಕಂಡಂತೆ ಚಂದಾ ಮೊಬಲಗನ್ನು ಮನಿಯಾರ್ಡರು ಮೂಲಕ ರವಾನಿಸಿದರೆ ಚಂದಾದಾರರಿಗೆ ಸ್ವಲ್ಪಮಟ್ಟಿಗೆ (ಎರಡಾಣೆ) ಉಳಿತಾಯವಾಗುವುದೆಂದು ಸೂಚನೆ

| | | | | |
|---|---|---|---|---|
| ಚಂದಾ—ಮೈಸೂರು ದೇಶದೊಳಗೆ | . 1 | 8 | 0 |
| ,, ,, ಹೊರಗೆ | 1 | 10 | 0 |
| ,, ಸೀಮೆಯಲ್ಲಿ | 3 ಷಿಲಿಂಗ್ | | |

ಚಕ್ರವರ್ತಿ ರಾಮಾನುಜಯ್ಯಂಗಾರ್ಯ,
ಅಧ್ಯಕ್ಷ,
ಸಂಸ್ಕೃತ ಮಹಾಪಾರಶಾಲಾ, ಮೈಸೂರು

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिकायाः
विनिमयविषयीभूताः एताः पत्रिकाः.

---

१. भंडारकर् रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना
२ जर्नल् आफ् ओरियंटल् रिसर्च्, मद्रास्
३ प्रबुद्धकर्णाटक, बेंगळूरु
४ मिथिक् सोसैटि जर्नल्, बेंगळूरु
५ यूनिवार्सिटि यूनियन् म्याग्सीन्, मैसूरु
६ एम् टि बि आर्ट्स्कालेजुम्याग्जीयन्, सूरत्
७ ओरियंटल् कालेजु म्याग्सीन, लाहोर्
८ सद्बोधचन्द्रिके, आनन्दवन
९ श्री शारदा, शृंगेरि
१०. कादम्बरीसंग्रह, चामराजनगर
११ सनातनधर्मसंजीविनी, मैसूरु

---

# सू च ना .

"मानमेयरहस्यश्लोकवार्तिकम्"

इति नाम कश्चिन्महाप्रबन्ध आनुष्टुभश्लोकरूपेण सगृहीतः सर्वसिद्धान्तसारसंग्रहरूप परस्सहस्रविषयविभक्तः एतत्पत्रिका-संपादकेन प्रणीत मुद्रितः प्रकाशितश्चास्ति । मूल्यमस्य (6) षट् रूपकाणि प्रापणभृति पृथगेव

उपलब्धिस्थान—पत्रिकासंपादक

---

## ಶ್ರೀ ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ (ಮಾಸಪತ್ರಿಕೆ)

ಈ ಪತ್ರಿಕೆಯು ಪ್ರಾರಂಭವಾಗಿ ಒಂಭತ್ತು ವರ್ಷಗಳಾದುವು ಇದರಲ್ಲಿ ಪ್ರಕಟವಾಗತಕ್ಕ ವಿಷಯಗಳು ಅತ್ಯುತ್ಕೃಷ್ಟವಾದುವು ಸರ್ವರಿಗೂ ತಿಳಿಯುವಂತೆ ಕನ್ನಡ ಭಾಷೆಯಲ್ಲ ಅನೇಕ ಪಂಡಿತರುಗಳಿಂದ ವಿಷಯಗಳು ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯಂತೆ ನಮ್ಮಲ್ಲಿ ಮತಪ್ರಕಾಶಕವಾದುದು ಮತ್ತಾವುದೂ ಇರುವುದಿಲ್ಲ ಇದರಲ್ಲಿ ಮಧ್ವಮತಕ್ಕೆ ಸಮ್ಬಂಧಿಸಿದ ವಿಷಯಗಳಲ್ಲದೆ, ಇತರ ಮತಗಳ ಪ್ರಮೇಯಗಳೂ, ನೀತಿ, ಧರ್ಮ, ಪುರಾಣೇತಿಹಾಸಗಳಲ್ಲಿ ಕಂಡುಬರುವ ಅನೇಕ ವಿಷಯಗಳೂ ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ. ಈ ಪತ್ರಿಕೆಯನ್ನು ಆದರಿಸುವಂತೆ ಸರ್ವರೂ ಪ್ರಾರ್ಥಿಸಲ್ಪಡುತ್ತಾರೆ

ಇದರ ವಾರ್ಷಿಕಚಂದಾ ರೂ ೨–೪–೦ (ಟಪ್ಪಾಲು ಸಮೇತ) ಪೋಷಕರು ೧ನೇ ತರಗತಿ ರೂ ೧೦–೦–೦ ೨ನೇ ತರಗತಿ ರೂ ೫–೦–೦ ಹಿಂದಿನ ಸಂಪುಟಗಳನ್ನಪೇಕ್ಷಿಸುವವರು ಬರದು ತರಿಸಿಕೊಳ್ಳಬಹುದು

ಕೆ. ವ್ಯಾಸಾಚಾರ್ಯ, ಬಿ.ಎ.,

ಕಾರ್ಯದರ್ಶಿ, ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ ಸಭಾ, ಮೈಸೂರು

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

# विषयसूचना

---





## विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम -संस्कृतविद्याभिमानिन पुरुषप्रवरा· यं कंचन विषयमाधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तर उपक्रमोपसंहारपरिकर्मितं कस्याप्यनुद्वेगकरं अचर्चितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकर धर्माद्यविरुद्ध "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्त , तेभ्यो महद्भ्य समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयाम· प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दान च मधुरा च वाक् ॥

संपादकस्य

---

## मूल्यप्रकारः

१ अस्या पत्रिकाया वार्षिक आग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम (भारतमण्डले)
२ विद्यार्थिन: पुन एकरूप्यकम्
३ विभिन्नदेशे सपादरूप्यद्वयम् (3 s ) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यंगार्,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः मैसूरु.

॥ श्री. ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रय प्रकटीक्रियमाणा

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समा

(ईशोपनिषत्)

सपुट-३] अक्टोबर् १९२७ [सञ्चिका-४

या सृष्टिः स्रष्टुराद्या वहति विधिहुत या हविर्या च होत्री
ये द्वे काल विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुस्सर्वभूतप्रकृतिरिति यथा प्राणिन प्राणवन्तः
प्रत्यक्षाभि. प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥

## गगनचर्तो जोगजलपातवर्णनम्.

यामध्युवास जगदादिमवीजजाल
या जीवयत्यखिलकामदुघा जगन्ति ।
याऽत्यद्भुता जलमयी तनुरष्टमूर्तेः
ता वर्णयामि कुतुकात्सरसैर्वचोभिः ॥ १ ॥

फुल्लत्कह्लारमल्लीप्रमुखसुमततिप्रान्तनिर्यन्मधूली-
पाळीसौरभ्यलुभ्यन्मधुरमधुकरारावरम्योपशल्ये ।

सपन्नव्रीहिसस्यक्रमुकनिचुळिनप्रान्तरे भूरिवर्षे
देशे जोगाभिधाने निपतति तटिनी शैलशृङ्गादुदग्रात् ॥ २ ॥

स्खलन्मराळकुलल्लोळितपङ्कजाळि-
झाकारिणीषु सरसीषु विलोलनेत्रान् ।
कह्लारगन्धिसुखमारुतपोतवीत-
मार्गश्रमान् वितनुते पथिकान्वनान्त ॥ ३ ॥

विचित्रपुष्पप्रकराभिरामा पार्श्वद्वयीशाद्वलकेशपाशा ।
विभाति पद्याऽरुणकान्तिहृद्या सीमन्तरेखेव वनान्तलक्ष्म्या ॥ ४ ॥

सितसिकतविकीर्णस्वच्छतोया निकुञ्ज
प्रतिहतगतिरुच्चैः शीकरानुत्क्षिपन्ती ।
तटरुहसुमपाळीवाहिकल्लोलमाला
प्रवहति तटिनीयं भूरिवारिप्रवाहा ॥ ५ ॥

अस्ति कर्णाटेषु प्रवर्षुकाम्भोधरमालामेदुरनभोविभाग विविधौषधलतासन्तानबहुलारण्यपरिवृतप्रान्तर. क्रमुकेक्षुशालिकेदारनिचितोपशल्यमनोहर· सर्वसपन्निकेतन केतनं महाशूरराजस्य शाद्वलः पङ्किलोऽनूपवान् व्रीहिपालितो भुवो विभागो (मळेनाडुसञ्ज्ञित ) ॥

यत्र च शीर्णपर्णाः जीर्णस्कन्धमूलाः दुरारोहा वनस्पतयस्सर्गादिसमयनिर्णयसाक्षिण इव दृश्यन्ते ॥

यस्मिश्च निवसितरुस्कन्धान्तराळलम्बमानानि व्याममात्राभोगानि माक्षिक–भ्रामर–क्षौद्र–पटलानि सुसज्जितातिथेयचषकाणीव विराजन्ते ।

यत्रैव परिणतफलमञ्जरीका पनसाढ्यो महानसायन्ते अशनाया-यासितपथिकवर्गस्य। योऽयं फल कुसुम कोरक पल्लवाङ्कुर मूलमात्र-प्रधानैर्निखिललोकरसायनैः वानस्पत्यैः वनस्पतिभिश्च संजीवयति भुवनम् ॥

यत्र च शैलद्रोणीषु प्रपातान्तरेषु गहनमध्येषु च कृतवसतयः कृषीवला अविज्ञातलोकतन्त्रा धवलाम्बरधारिजनदर्शनभयप्रपलायमानाः अर्धोरुकपरीधाना. कटिनिबद्धचर्मपट्टिकालम्बमानच्छुरिका कालकम्बल-खण्डसंवीता यावदर्थपरिग्रहा निवसन्ति ॥

यत्र च ग्रामयुवत्यः प्रकाममनोहरा निष्कंचार्धचोलिकाग्रथित-वक्षसः कुसुममञ्जरीपरिष्कृतग्रन्थिमत्कबरीभरा द्व्यङ्गुलपरिणाहिकुङ्कुम-रेखासवलितफाला मृत्स्नावलयसकुलप्रगण्डाः तालपत्रकृतावतंसा नीलमणिग्रीवाभरणा ताम्बूलापूरितवदनाः सितस्मितसंदर्शितदशना स्वभावतरळलोचनाः कुटिला कुन्तळेषु वक्राः कटाक्षेषु मन्दा गतिषु सरळा हृदयेषु सुहृदः सर्वभूतेषु सक्ता धर्मकथासु महासाध्व्यः पुण्य-मूर्तयो निर्वैराः प्रशान्तमानसाः विराजन्ते ॥

यत्र च निवसतामभ्यवहारमात्रलाभतुष्टानां क्लेशप्रायाः समा-रम्भा रोगप्राया विषयोपभोगा दीनप्रायास्समाजाः छलप्राया व्यवहाराः दुःखप्रायाणि जीवितानि वार्धकप्रायाणि वयांसि धेनवोपि प्रसूतिमात्र-दोहाः युवानोपि परिणतवयसः। हंत नाद्यापि दयते विधिरपि तेषां क्लेशविवशानाम्। स एवायं प्रदेशो दुःखबहुळगहनमध्यस्थितोऽपि कराळसरीसृपशार्दूलाध्यासितोऽपि निरन्तरोड्डीयमानमशकानिकरा कुलोऽपि दुश्चिकित्स्यरोगग्रन्थिहेतुरपि क्षयिष्णुसर्वभावोपि। नितरां प्रीणयत्यन्त-रात्मानम्—संपन्नसस्यतया निसर्गरुचिरतया प्रशान्तपावनतया जन्म भूमितया शरावती—कुमुद्वती—तुङ्गभद्रादिमहानदीनां प्रशान्तनिकेतनतया

विभाण्डकादिमहामुनीनां क्रीडागारतया शारदाविलासानां कोशभवनतया प्रकृतिसौन्दर्याणां च ॥

यत्र तु समीराः नवकुसुमपरिमळवाहिनः सरांसि च स्तोकोद्विन्नारविन्दानि शिखरिणः प्रवाहोद्गाररुचिराः कान्ताराणि सुरभिकुसुममञ्जुळानि क्षेत्राणि च दुर्लभवस्तुपूर्णानि । येषां गुणवर्णनं महीयसामपि महाकविवचसामविषयः । तथापि तद्गुणाकृष्टहृदयाः सत्स्वन्येषु विचित्रवस्तुषु निसर्गरुचिरं सर्वाश्चर्यनिदानं समोहनमिन्द्रियाणां प्रसादनं च हृदयस्य निर्वृतिदायि चक्षुषोः समाह्लादनं च कुतूहलास्पदं च अन्यत्र दुर्लभं च शरावतीजलपातमधिकृत्य प्रपञ्चयामो दृष्टश्रुतानुभूतविषयवस्तुकं प्रबन्धम् ॥

ते त्रयः कविसर्वस्वं निर्झरारण्यभूभृतः ।
प्रायः कवीनां व्याहारा यद्गुणस्तवनिर्वृताः ॥ ६ ॥
सन्ति भूयांसि चित्राणि कर्णाटेषु गुणोज्ज्वलः ।
जेगीयते जोग इति निर्झरोद्गारमञ्जुलः ॥ ७ ॥
विचित्रकुसुमापीडनानानोकहमध्यगा ।
गभीरगर्तनिश्रेणिरुत्तनादवतारिणी ॥ ८ ॥
भोगीन्द्रभोगकुटिला पदवी सुदवीयसी ।
शरावतीकूलमनुप्रसृता भाति सागरात् ॥ ९ ॥
स्फुटार्था तुहिनास्पृष्टपदन्यासमनोहरा ।
काळिदासस्य वाणीव यत्र भाति शरावती ॥ १० ॥
मधुगन्धिनि कान्तारे हरितारुणपल्लवे ।
कुसुमामोदनिचिते मनोहर्षविधायिनि ॥ ११ ॥
सीकरासारसंपातस्थगितार्कमरीचिनि ।
निर्झरारावमधुरे कृतकारामसुन्दरे ॥ १२ ॥

तत्र श्रीकृष्णराजेन्द्र श्लाघनीयगुणाकर ।
विनिर्ममे पान्थशाला सर्वोपकरणान्विताम् ॥ १३ ॥
विशालकक्ष्या विपुला मसृणस्तम्भभूमिकाम् ।
परिच्छदसमाकीर्णा पथिकानन्ददायिनीम् ॥ १४ ॥
यत्रागत्य गिरे शृङ्गान्निपतन्ती शरावर्ता ।
लुठन्ती शैलपादेषु क्षरन्ती ग्रावसन्धिषु ॥ १५ ॥
प्रसरन्ती सैकतेषु नृत्यन्ती प्रस्थभूमिषु ।
स्खलन्ती शीर्णपाषाणे रुवन्ती प्रस्तरान्तरे ॥ १६ ॥
भ्रमन्ती वल्लरीकुञ्जे प्रवहन्ती समस्थले ।
पातयन्ती कूलरुहानुद्रुजन्ती तटस्थलीम् ॥ १७ ॥
वेष्टयन्ती गण्डशैलान् पूरयन्ती महावटान् ।
श्लथयन्ती प्रतीघातान् प्लावयन्ती सुमावलिम् ॥ १८ ॥
भ्रामयन्ती वेतसानि दर्शयन्ती जलौकसः ।
उदञ्चयति सम्मोदं मनसो वर्णयामि ताम् ॥ १९ ॥
स्वतो विचित्रा प्रकृति किमु वर्णयते कवि ।
किं तु वर्णयति स्वीयै. प्रतिभास्फुरिताक्षरै ॥ २० ॥
रामचापविनिर्मुक्तशरनिर्भिण्णवर्त्मना ।
यन्निर्गतास्यम्बुतीर्थात्त्वत्ता प्राहुश्शरावर्ताम् ॥ २१ ॥
चित्र गुरुत्व तव यद्दर्शनात्प्रतिभोदय ।
उपदेशादृते काव्ये स्फुरन्त्यविदुषामपि ॥ २२ ॥
कवीन्द्रकल्पनाशक्तिमत्येति तव चारुता ।
अल तद्वर्णनायासैरिति मौन हि साम्प्रतम् ॥ २३ ॥
तथापि त्वद्गुणोत्कर्षो वाचालयति मामपि ।
को हि स्वादुरसां जिह्वा निम्नगा वा प्रतीपयेत ॥ २४ ॥

उपलब्धफल चक्षुर्मन प्राप्तार्थनिर्वृतम् ।
सैषोक्तिर्हि तव श्लाघा फल्गुरन्यो गुणस्तवः ॥ २५ ॥
यत्र यत्र स्थितैर्लोकैर्याद्दग्रूप विभाव्यते ।
तदासेचनक प्राहुर्याथात्म्य न विदुस्तव ॥ २६ ॥
दिग्वधूवदनालोकविलासमणिदर्पणे ।
झरोद्गारे सुधासारे कस्य चित्त न सज्जते ॥ २७ ॥
तारकारसनिष्यन्दा घनसारद्रवापगाः ।
निष्पीडितेन्दुपीयूषा· स्यन्दन्ते किमु निर्झरा ॥ २८ ॥
खेचरीकबरीभारगलत्कुन्दस्रज किमु ।
सपद्मका कि लम्बन्ते नागनिर्मोकपट्टिका ॥ २९ ॥
ऐरावतकरोत्क्षिप्तव्योमगङ्गाम्बुसीकरा ।
ससिताम्बुरुहा· किं नु च्योतन्ते बद्धमण्डला ॥ ३० ॥
निर्णिक्तसितकौशेयव्यूतिखट्टाप्रसारितम् ।
तन्तुजालमिवाभाति वारिधाराकदम्बकम् ॥ ३१ ॥
मरुद्विकीर्णफेनौघजालको भाति निर्झर· ।
भक्तिचित्रितदिङ्नागप्रसारितकरोपम ॥ ३२ ॥
च्योतद्भि कुसुमै· कीर्णा घर्मस्रसितबन्धनै ।
अभ्रच्छिद्रोन्मिषत्तारामाला द्यौरिव राजते ॥ ३३ ॥
नीलशैवालसछन्ना सितनिर्झरवाहिनी ।
यमुनावीचिसभिन्ना जाह्नवीव बिराजते ॥ ३४ ॥
उत्किरन्तीव करकान् दर्शयन्तीव विद्युतः ।
मुञ्चन्तीव घनासारान् वर्षायन्ती विभाव्यते ॥ ३५ ॥
शिलासकटनिष्ठ्यूता धनुर्मुक्तेवगर्जति ।
कुत्रचिन्मधुरारावा वल्लकीव प्रगायति ॥ ३६ ॥

कल्लोलास्फालनोद्भूतपटुरिङ्खत्पयोभरा ।
विद्रुताननुयान्तीव नुदन्तीव पुरोगतान् ॥ ३७ ॥
उत्क्वथ्यन्त इवोत्क्रान्तान्फूत्कारध्वनिभीषणा. ।
उत्सिच्यन्त इवोद्भ्रान्ता वारिपूरास्ममन्ततः ॥ ३८ ॥
व्योमकेशजटाजूटनिपतत्स्वर्धुनीव या ।
आभाति हिमगौराम्भस्सीकरासारवर्षिणी ॥ ३९ ॥
वर्षासु शाद्वला भूमि शैवालशबलो झर ।
गगन नीलजीमूतमविशेषेण भासते ॥ ४० ॥
उद्यन्निर्घातनिर्ह्रादभीकरैर्निर्झराम्बुदै ।
विक्षिप्यन्ते गदर्सीव भूतग्रामा हि बिभ्यति ॥ ४१ ॥
गर्जत्पर्जन्यविस्फूर्जद्वज्रनिष्पेषनिष्ठुरा ।
प्रस्तरोद्धर्षनिष्ठ्यूतघर्घरा भान्ति निर्झरा ॥ ४२ ॥
धूमधूम्रैस्समुद्भूतै सीकरैर्बद्धमण्डलै ।
व्योमेव भाति धरणी सबलाकैरिवाम्बुदै ॥ ४३ ॥
फेनपुञ्जसमाकीर्णनीलह्रद इवोत्थित ।
निर्झरो भाति शैलाग्रे छायापथ इवाम्बरे ॥ ४४ ॥
निर्झरोद्गारबाष्पौघैश्श्यामपक्षतिकर्बुरै ।
स्फूर्जद्वज्रप्रहारेण निश्वसन्तीव पर्वता. ॥ ४५ ॥
लेलिहानोग्रजिह्वाग्रा दर्शितोपलदंष्ट्रिका ।
ज्वलदुल्कामुखीवाऽसौ निशि दीपैः प्रकाशते ॥ ४६ ॥
गर्जन्मृगेन्द्रहूङ्कारो दिशाद्विरदबृंहितम् ।
स्फूर्जद्वज्रविनिष्पेष. किंस्विन्निर्झरझाकृतिः ॥ ४७ ॥
गभीरे भीकरे गर्ते सहस्रारत्निसम्मिते ।
शैलाग्रान्निपतत्योघ. नान्योऽस्य सदृशो भुवि ॥ ४८ ॥

अपि भूभृत्कुलोत्पन्ना निम्नगाऽसि शरावती ।
अध पतनमन्विच्छ कृत केन निवार्यते ॥ ४९ ॥
सागर दूरतस्त्यक्त्वा बहुकान्तारसगतम् ।
खण्डितेवप्रणयिनी भृगुपातोद्यता किमु ॥ ५० ॥
जामदग्न्यशराघातविद्रुताब्धिमनुद्रुता ।
आवेगस्खलितोद्धाष्पमुखी निपतिता किमु ॥ ५१ ॥
विनिपातोऽपि ते रम्यो जनतानन्दवर्धन ।
निसर्गमधुराणा हि किमिव स्यान्न मण्डनम् ॥ ५२ ॥
मनसो मोदजननी प्रतिभीतिविधायिनी ।
नैवान्या त्वादृशी लोके तद्वय नैकसश्रयम् ॥ ५३ ॥
उन्मादयस्यहो लोकान् त्वदालोकसमुत्सुकान् ।
आरोहन्त्यवरोहन्ति निषीदन्ति भ्रमन्ति यत् ॥ ५४ ॥
निध्यायता तवावास मनो निर्विषयान्तरम् ।
योगे लगति यस्मात्ते स्थान योग प्रचक्षते ॥ ५५ ॥
आयान्ति क्षेत्रमित्येके रमणीयमितीतरे ।
यैर्भावैरभिगच्छन्ति तान् सर्वान् पूरयस्यहो ॥ ५६ ॥
हरितान् शाद्वलाग्रेषु मुक्तास्थूलपय कणान् ।
कर्षन्त्यामलकीभ्रान्त्या व्यात्तचञ्चुपुटा शुका ॥ ५७ ॥
शशिबिम्बात्सुधाधाराः क्षरन्तीति धृतक्षणाः ।
आकण्ठमापीतरसाः चकोरा यान्ति निर्वृतिम् ॥ ५८ ॥
दुरारोहप्रपातेषु कृतनीडा' कुटुम्बिन ।
पारावता' समेधन्ते धान्यसग्रहनिर्वृता ॥ ५९ ॥
मृणालकबलभ्रान्त्या राजहसा प्रियासखा ।
वर्षास्वपि विकर्षन्ति बिसकाण्डोपमान् झरान् ॥ ६० ॥

घनाघनाधिया मत्ता सदा नृत्यन्ति बर्हिणः ।
संध्याया शोणितभ्रान्त्या शार्दूलो लेढि निर्झरम् ॥ ६१ ॥
दधिनिर्मथनारावमिवाकर्ण्य झरध्वनिम् ।
बिडाला इव मोत्कण्ठा भान्ति तत्र कुशोपलाः ॥ ६२ ॥
चातकास्सलिलोद्गारमीकरासारदुर्दिने ।
उत्तानचञ्चुभिस्तोयाबिन्दूनाददते मुदा ॥ ६३ ॥
वेदिप्ररूढा विरुजो जटालास्सत्त्वसंश्रयाः ।
वसोर्धारां जुह्वतीव मुनीन्द्रा इव शाखिनः ॥ ६४ ॥
केचिद्यथायथं दृष्ट्वा यान्ति निर्वृतमानसाः ।
केचिद्वितर्कचतुरा निध्यायन्ति मुहुर्मुहुः ॥ ६५ ॥
पुण्यतीर्थभवा नद्यः पुण्यसंतानहेतवः ।
कुर्वन्ति पुण्योपचितान् पापिनोऽपि कृताप्लवान् ॥ ६६ ॥
यदि स्वर्गसुखं भूमावात्मनानेन वाञ्छसि ।
भूयोभूयश्शरावत्या जलपातं निभालय ॥ ६७ ॥
मङ्गळायतनं भूमेर्मनःप्रेमनिबन्धनम् ।
लोकसंवननं वारिप्रपातो जयताच्चिरम् ॥ ६८ ॥
सूर्यांशुच्छुरितेन्द्रचापरुचिराः शङ्खप्रभाभासुरा
तीरप्रान्तविरूढलोध्रकुसुमच्योतत्परागोत्कराः ।
विच्छिन्नामलमौक्तिकाकृतधराः निर्मोकसूक्ष्मान्तराः
च्योतन्ते पृषदन्तराळभिदुराः स्रोतस्विनीशीकराः ॥ ६९ ॥
स्यन्दन्ते क्षीरधाराः किमु गगनतलाच्चन्द्रकान्तिप्ररोहाः
निष्ठ्यूताः किं हिमानी किमु पतति किमु स्वर्धुनीफेनपुञ्जाः ।
किंस्वित्स्वच्छाभ्रजालं विगलति सततं खेचरीकेशपाशात्
मल्लीमालाश्श्ययन्ते किमु गिरिशिखराद्वारिधाराः पतन्ति ॥

प्रत्यूषे रविकिरणैस्सशक्रचापा. मध्याह्ने द्रुतकनकाभकान्तिरम्या ।
सध्यायामरुणदुकूलपट्टिकाभा दृश्यन्ते निशि च तमालपर्णनीला ॥ ७१ ॥
त्रिदिवमभियियासोर्नागराजस्य क्लृप्ता किमु रजतशलाकाकीर्णनिश्रेणिरेषा ।
शरधिमथनजातक्लेशनिर्वापणाय प्रविशति सुतलं किं वासुकिः स्विन्नगात्रः॥
रविकरपरिरम्भात्तप्तशैलाम्बरीषस्फुरितरुचिरताराकारलाजा इवोच्चै ।
उपलशकलरिङ्गन्निर्झरादुज्जिहाना प्रसृमरजलधाराशीकरा निष्पतन्ति ॥
नीराभिन्नमृदुपक्षतिभारा शीकरस्थगितकण्ठविरावा. ।
उत्पतन्ति निपतन्ति कपोतास्तिर्यगूर्ध्वमभितः प्रसरन्ति ॥७४॥
अरुणकिरणजालोद्भिदस्क्रान्तरागान्
धवळसलिलबिन्दून् दाडिमीबीजबुद्ध्या ।
शिशिरसलिलपातक्लिन्नपक्षा विहङ्गा
विवृतमुखकराळा. सग्रहीतु यतन्ते ॥ ७५ ॥
शैला झरोद्गारविलोकनेन प्रवृत्तनृत्ता इव कम्प्रवृक्षाः ।
रोमाञ्चिताङ्गा इव रूढघासाः हर्षाश्रुसिक्ता इव सीकरार्द्राः ॥
रसातलादुद्धरणाय भूमेर्वराहदंष्ट्राग्रनिखातगर्तम् ।
नून तदेतत्कथमन्यथाऽस्य समानरूप न हि दृश्यतेऽन्यत् ॥७७
विविधकुसुमकीर्णारण्यभूमिर्विंतानी
कृतललितलताग्रा निर्झरोद्गाररम्या ।
सुरुचिरजलपातालोकनायागतानाम्
दिशति विविधचित्रानन्दसन्तानलक्ष्मीम् ॥ ७८ ॥

**इति कुक्के सुब्रह्मण्यशर्मणः कृतिषु,**

**जोगजलपातवर्णनम्.**

## रजतमहोत्सववृत्तान्तसंग्रह

अस्मच्छ्रीमन्महाराजस्य धर्मेण राज्यपरिपालनेन संवत्सराणा पञ्चविंशतिस्संपूर्णेति बहुप्रकारेण कोलाहलेन मसंभ्रमेण समाडम्बरेण महान्तमुत्सव अतीते आगस्टुमासे अष्टमे दिने सोमवासरे महीशूर नगर्यां राजधान्यामभिनिर्वर्त्य देशीयास्सर्वा अपि प्रजा प्रसिद्धा अमन्दमानन्दमन्वभवन् । तथाहि —

तस्मिन्नेव शुभसमये सार्वभौमप्रतिनिधिप्रभृतय प्रभव भू-मण्डलमण्डनायमाना महाराजा मित्रगोष्ठीप्रविष्टा प्रख्याता. पुरुष-धौरेयाश्च महान्तमेनमुत्सवमभिसमूचयितु महाराजस्य राज्यस्य च श्रेयस्सप्राथ्य तन्त्रीवृत्तान्तान् बहुविधान् प्राहिण्वन् । तथा भारतवर्षीया वर्षान्तरीयाश्च पत्रिकाप्रकाशका. महाराजस्य कल्याणगुणानभिवर्ण्याभि-नन्द्य स्वीयं स्वदेशीय चानन्द बहुमुख प्राकाशयन् ॥

तस्मिन्नेव शुभदिवसे प्रात श्रीमन्महाराजप्रासादे काचन महती महाजनसभा प्रावर्तिष्ट । तस्याश्च सभायाः वैभव यथावदभिवर्ण-यितु अप्राप्य मनसा सह वाचाऽपि निवर्तन्त इत्युक्तिः नाति-शयोक्तिः । तथापि ' विवक्षितं ह्यनुक्तमनुताप जनयति" इति महाकविवचो हृदि निधाय कर्तव्यं च कर्म कथंचिदपि कर्तव्य-मेव" इति नीतिं चानुसृत्य किंचिदेवात्र प्रकाशयाम ॥

तस्यां च सभायां सज्जीकृत सर्वालङ्कारसमलंकृत ज्वल-द्भास्करवर्णाभ भद्रासनं यावदारुरुक्षत्येष महाराज तावदन्तरे तस्मिन्नेव प्रासादे कल्याणमण्डपे समवेतस्य पण्डितमण्डलस्याशीर्वादं वैदिका-

नुवाकपाठमय स्वीकर्तु समुचितवेषभूष तत्समयानुगुण किंचिदासन-मलचकार। तत्र च वेदत्रयाशीर्वादपुरस्सरान् मन्त्राक्षतान् विनय-विश्वासावनतेन शिरसा सतोषसंभृतेन चेतसा च प्रतिगृह्य पण्डित-मण्डलीं प्रति एवमवादीत्—सस्कृतेन वचसाऽतिगम्भीरध्वानिना सकल-जनहृदयानन्दावहेन समुदञ्चितरोमाञ्चेन समुपजनितप्रहर्षविष्फारितलो-चनागतानन्दजलकणेन किंबहुना आस्तिकविज्ञानप्रथमाचार्येण ॥

यथा—"भो भो! निगमागमपार-दृश्वान. शिष्यप्रशिष्यनिवहप्रख्यापितदिगन्त-विश्रान्तकीर्तय ,यादवभूमिपालानां श्रेयसे निरन्तरनिध्यातदेवतापरपरा महाशयाः पण्डित-वर्या.! यत 'तत्रभवता भवता अमोघाशीर्वा-दस्य अस्मिन् स्मरणीये सुदिवसे पात्रता नीतोऽ-स्मि, अतोऽहमात्मानं धन्य मन्ये। शुभसमयेऽ-स्मिन्निदानीं आस्थानमण्टपे भद्रपीठमारोढुमनुज्ञा प्रार्थये" इति ॥

श्रुत्वा चैतल्लोकोत्तर अश्रुतचर वच. तत्र मिलिताः पण्डित प्रभृतयः महाजना समुद्गतप्रीतिपुलकसकलाङ्गावेद्यमानहृदयहर्षप्रकर्षा' ताभिर्मनोहराभिः वाग्भि' प्रक्षाळिता इव उन्मीलिता इव स्वच्छीकृता इव अभिलिप्ता इव अलकृता इव उद्भासिता इव क्षणमात्रं बभूवु.। स्मृत्वास्मृत्वा च आश्चर्यपारावारजलमानुषनिर्विशेषाश्च प्रादुर्बभूवु ॥

ततश्च महाराजः सहानुजः दिव्यालकारसमलकृत विलक्षण-कान्तिकमनीयमुखविकासः मन्दहाससंसूचितसकलजनकुशलप्रश्न सह-सोत्थितप्रजाप्रमुखसाञ्जलिबन्धावनतशिरोमात्र प्रकटितसुस्वागत. सक-लप्रजाप्रमुखपरिपूर्णाया महासभायां सर्वतोभद्र भद्रपीठमारुरोह।

अथच संस्कृतमहापाठशालासाहित्योपाध्यायाः सर्पाघट्ट वेंकटाचार्या एतानि मङ्गलाशासनपद्यानि अपठन्। यथा—

विजयतां श्रीकृष्णराजेन्द्रसार्वभौमः

आविर्भावमुपेत्य यः प्रविमले वाणीविलासाम्बिका-
गर्भाब्धौ यदुवंशमौक्तिकमणेः श्रीचामराजप्रभोः।
रीत्याऽतीवमनोज्ञया तनुजवद्धर्मेण पाति प्रजाः
तस्मै कृष्णमहीश्वराय दिशतु श्रेयांसि चामुण्डिका॥ १॥

जातोऽयं रजतोत्सवस्सुरुचिरः श्रीकृष्णराजेन्द्रभू-
जाने: सन्ततपञ्चविंशतिशरत्सख्यातराज्यावनात्।
लोकानन्दकरोऽग्रतो ननु महच्छब्दप्रपूर्वश्च सन्
बोभूयाज्जगदीश्वरस्य कृपयेत्याशास्महे सादरम्॥ २॥

राजा मातेति वाल्मीक्युदितवचनवत्पुत्रवत्पाति योऽस्मान्
सौख्यानामानुकूल्यादनुपधि कलयन् ऐहिकामुष्मिकाणाम्।
तत्राप्यामुष्मिकाणामुपकरणविधौ साधसम्पादकेऽस्मिन्
श्रीकृष्णेन्द्रे कृतज्ञाः नहि तदुपकृतिं विस्मराम कदाऽपि॥

गाम्भीर्यौदार्यधैर्यप्रभृतिगुणगणालङ्कृतः कृष्णराजः
सर्वेश्वरश्श्रेयसानां सहजपरिजनैर्भाजनीभूय भातु।
राज्ये तद्रक्षितेऽस्मिन् निवसतु सुजनः रामराज्योपमाने
सर्वाभ्यस्तत्प्रजाभ्यः कलयतु कुशलं सर्वलोकैकनाथः॥ ४

देवोर्वीसुरपूजनैकनिरते राजर्षिकीर्त्यन्विते
न्याय्येनैव पथा तथा वसुमतीं यस्मिन्निमां बिभ्रति।

लब्धाभीष्टसमुद्यमा प्रमुदिता· सर्वा प्रजा· सर्वदा
श्लाघन्ते सुचिर स एष जयतु श्रीकृष्णभूभृन्मणिः ॥ ५ ॥

ततश्च महीशूरदेशीयसर्वप्रजामण्डलप्रतिनिधिपदमधिगता श्रीमन्त. के पि पुट्टण्णश्रेष्ठिमहाशया. कर्णाटकभाषामयीमेतामभिनन्दनपत्रिकामपठन्। सैषा पत्रिकेत्थ संस्कृतभाषया परिणतिमुपगता। यथा—

॥ श्रीरस्तु ॥

**स्वस्ति श्रीमन्महीमण्डल मण्डनायमानेऽस्मिन् भरतखण्डे सुप्रख्यातकर्णाटजनपद संपदधिष्ठानभूतस्य श्रीमन्महीशूरसंस्थानस्य परिपालयितु राजाधिराज राजपरमेश्वर प्रौढप्रतापाप्रतिमवीराद्यनेकबिरुदालङ्कृतस्य महाराज श्रीमच्चामराजेन्द्रतनूभवस्य**

## तुरीय श्रीमत्कृष्णराजेन्द्र ओडेयर् बहदूर्.

**॥ महाप्रभो दिव्यसन्निधौ ॥**

श्री शालीवाहनशकेऽष्टादशे शतके एकोनपञ्चाशत्तमे प्रभवसंवत्सरे श्रावण शुक्ल दशम्यामिन्दुवासरे प्रवर्त्यमानस्य महास्वामिनः धर्म्यप्रभुत्व रजतमहोत्सवस्य समये शुभेऽस्मिन् महाप्रभो कृपापरिपोषणेनानन्दिताभि नानाजातिमतविभागविभक्ताभि प्रजामण्डलीभिस्सर्वाभिस्समेत्य सहजराजभक्ति विनय विश्वास कृतज्ञता प्रदर्शनपुरस्सरं समर्पितैषाऽभिनन्दनपत्रिका ॥

यथा

महास्वामिन कुलपरम्परासमागत दिव्यं सिंहासनमारुह्य दुर्भरराज्यभारस्वीकरणात्प्रभृत्यद्य यावत् समत्यगमन् पञ्चविंशति· संवत्सरा ।

अत्रान्तरे महाप्रभो परिपालन निष्कण्टक कल्याणपरिपूर्ण लोकानुरञ्जकञ्चाभूदितीम महान्त संतोषमिदानीं विज्ञापयितु वयमिमा-स्सर्वा प्रजास्समुत्सहामहे ।

महास्वामिना प्रजानामभ्युदयाय विरचिता विविधा. कार्य-कलापा लोकवृत्तान्ते सुवर्णमयैरक्षरैरर्हन्ति लेखनगोचरतामाश्रयितुम् । महाप्रभोश्चारित्र च सकलभूपालकुलस्यापि निदर्शनभूतमिति सर्वेष्वपि देशेषु सुप्रसिद्धम् । एतादृशस्य प्रभोर्लाभः प्रजाना भाग्यविशेषो-दयादिति च विश्वजनविदितमेव ॥

महास्वामिनो राज्यपरिपालनविचक्षणता सर्वेऽपि राजनीति-निपुणाः श्लाघन्ते । साङ्गोपाङ्ग च राज्यतन्त्र प्रकृत कालमनुसृत्य विकासित सत् शासनाविधान कार्यसाधन न्यायनिर्णयविभागेषु सर्व-सम्मत समुल्लसति । एवंविधराज्यपरिपालन कौशलेन कोशसपत्ति-स्त्रिगुणिता अभिवर्धमाना च विद्यते । तदनुसारेण प्रजाना सुख सपत्तिश्च बहुसुखमेधमाना अनुभूयते ॥

महास्वामिन प्रजावात्सल्यप्रभावेन विविधविभागेष्वपि जनेषु प्रचुरीक्रियमाणया विद्यया देशेऽस्मिन् ज्ञानसपत्तिरुद्योतते । गीर्वाणी भाषा कार्णाटिकी भाषा च निरतिशयामुन्नतिं लभते । पाश्चात्य विज्ञान प्रसरति । शिल्पसगीताद्या ललिता. कला विलसन्ति । सहस्राधिका. पाठशाला प्रौढकलानिलया विश्वविद्यापीठ च महाप्रभो विद्याभिमानितायाः नित्यनिदर्शनीभूय देशाभिवृद्धे पूर साधका अभिशोभन्ते ॥

महास्वामिना निर्मापिता विशाला' कृष्णराजसागरप्रभृतयः सरोवरा कूपतटाककुल्या सुगमा. पन्थानः धूमशकटमरणयो विद्यु-च्छक्तिसधानविशेषा खनिजशोधनोद्यमा रासायनिकरचना. इतराश्च

वैज्ञानीककृतयः कृषिकर्मविस्तरण यन्त्रकर्मप्रसरण वाणिज्योत्तेजनानां परमनुकूला प्रजासूत्साहशक्तिं परिपूर्य बुद्धिकुशलतामभिवर्ध्य समुन्नता सुखजीवनयोग्यता सम्पादयन्ति ॥

महास्वामिना प्रतिष्ठापितानि नवनवयन्त्रोपकरणसज्जीकृतवैद्यशाला पशुचिकित्सालय पुरालंकारभूतसौधमण्टपोद्यान पुस्तकभाण्डागार पत्रिकापठनमन्दिर धनागार सहकारसघीकरणानीत्यादीनि प्रतिवर्षमभिवर्धमानानि सुखजीवनसमुत्कर्षसूचकानि महाप्रभो सकलप्रजासमुद्धरणसामर्थ्यं प्रकटयन्ति ॥

महास्वामिना सवर्ध्य सुदृढीकृता प्रजाप्रतिनिधिसभा शासनविधानसभा सपदभिवर्धकसमितिर्मण्डलसमिति नगरसभा ग्रामसभेत्याद्या राष्ट्रेऽस्मिन् प्रजानां स्वधर्मप्रकाशनाय साधनीभवन्ति। आभिस्सभाभि प्रजा राज्यभारविचारासक्ता जनपदसेवामभ्यस्यन्त्य देशकार्यनिर्वाहभागिन्यो भवितुमवकाश लभन्ते। तन्महिम्नाच प्रजासु राजकीयन्यायपरिज्ञान स्वकर्तव्याकर्तव्यविवेचन स्वप्रयत्नोत्साहः ऐकमत्यसपादनं देशहितैकदृष्टिश्च सवर्धन्ते। किंच राज्ययन्त्र निरातङ्कं प्रजारञ्जक च प्रचलति। येन च महाप्रभो र्देश राष्ट्रस्य श्रेयश्चेतोऽप्यतिशयेन वृद्धिमाप्स्यतीति वय सुदृढं विश्वसिम ॥

अपिच महास्वामिनो दैवभक्तिः भूतदया सदाचारानुवर्तन प्राचीनसप्रदायादर सत्त्वविशुद्धि गुरुजननम्रता विद्वज्जनममता राजधर्मपरायणता मन्त्रालोचनचतुरता लोकाराधनतत्परतेत्यादयोऽनन्तास्शोभना गुणाः सकललोकसस्तुता महाप्रभु जनकयुधिष्ठिरप्रमुखराजर्षि गोष्ठीपरिगणनार्हं कुर्वन्ति। महास्वामिनः एतादृशगुणरत्ननिर्मलमयूखाः प्रजानामस्माकमतीव गौरवावहा चित्तसमुन्नतिमापादयन्ति ॥

अथचास्मिन्नेव समये ब्रिटीष् सार्वभौमप्रभवोऽपि महास्वामिनो राज्यपरिपालनपरिपाट्या उत्कृष्टतां प्रजानुरागमुदात्तसंकल्प सद्गुणसंपद

चाभिनन्द्य महास्वामिनो महिमानं लोके प्रकाशयन्ति स्म । तादृशमभि- नन्दनं च विशदयितुं सार्वभौमप्रतिनिधयः लार्ड् इर्विन् प्रभवः अस्म- द्राज्येन प्रदीयमाने करधने सार्धदशलक्षसंख्याकानि रूप्याणि न्यूनी- कृत्यान्योन्यं मित्रतां नितरामभ्यवर्धयन्नित्येतत् सर्वेषामस्माकमत्यन्तं संतोषं मानं च समुद्वहति ॥

श्रीमहास्वामिनः श्रीमद्युवराजस्य श्रीमहामातुः सकलस्य च राजकुटुम्बस्य जगदीश्वरः आयुरारोग्यसौभाग्यसौख्यान्यपरिमितान्यनुगृ- ह्णातु । महास्वामी च सर्वत्र सर्वदा विजयी भवतु । महास्वामिनः कीर्तिश्च दशस्वपि दिशासु प्रसृता यावच्चन्द्रतारकं विलसतु । एवमेव महाप्रभोः धर्म्यप्रभुत्वे सुवर्णमहोत्सवसमये पुनस्ससंभ्रममभिनन्दनसम- र्पणसौभाग्यं प्रजानां सिध्यतु । सन्तु समस्तानि सन्मङ्गळानि महाराजस्य—इत्येवखलु महास्वामिनः प्रजानामस्माकं सततं सम- भ्यर्थना ॥

| | |
|---|---|
| मसूरुपत्तनम् क्रि श. ८-८-१९२७ | एवं महीशूरदेश प्रजामण्डलस्य विज्ञप्तिः. |

श्रीरस्तु

श्रीमता महाराजानां श्रीकृष्णराजेंद्रओडेयर् बहद्दूर् जि.सि. एस्. ऐ. जि. बि. इ महास्वामिना. स्वीयराज्यभाररजत महोत्सव, संभ्रमसमये संस्थानप्रजामण्डलप्रतिनिधिना महासभायां पठित्वा समर्पि- ताया अभिनन्दनपत्रिकाया. तदानीन्तनं साक्षान्मुक्तकण्ठं कर्णाटभाषामयं प्रत्युत्तरमिदम्-यथा—संस्कृतीकृतम्—

अयि प्रियतमा प्रजामहाशया !

युष्माकमस्मद्विषये विद्यमानानां प्रीतिविश्वासादीना प्रदर्शिकामेतामभिनन्दनपत्रिकामादरेण बहुना स्वीकुर्महे। अत्र युष्माभि प्रदर्शिता भक्तिश्रद्धादय अस्माक अधिक सतोष समुपजनयन्तिस्म।

न खलु केवल भगवान् अनुगृहीतवान् महीशूरदेशस्य सुखसपदो बहुविधा। पर तु अनुगृहीतवानपि प्रजा विनयसपन्ना उदारचित्ता· कार्यासक्ताश्च। महीशूरसंस्थानमिदमादर्शसंस्थानमिति विश्रुताया· ख्याते, इदानीमेव सार्वभौमप्रभुवर्यै प्रदर्शितस्य घनतरपुरस्कारस्य च युष्मदीय प्रीतिपूर्वक साहायकमेव परम निदानम्॥

अनयैव रीत्या पुरस्तादपि सर्वेषामस्माकमैकमत्येन सहोदरभावेन च कर्माणि कुर्वतां कृषि शिल्प वाणिज्यादीना अधिक सौकर्यं परिकल्प्य सर्वेषामपि मानवानामभिवृद्धये साम्येनावकाश च प्रयच्छता, नवीनसमये समुन्नता स्थितिमधिरूढै इतरै देशैस्समता महीशूरदेशस्य संपादयितु सर्वेऽपि शक्तिसाहसादय· अर्हा भवन्ति समुपयोक्तुम्॥

एतादृशे महति कार्ये "सर्वा अपि जातयः अस्मदीया एव प्रजाः, एकस्मिन्नेव देशे समुत्पन्ना·" इतीममश हृदि निधाय उत्तम पदमधिरूढै· आत्मसमानामभिवृद्धिमनधिगतवतामितरेषां साह्यकारिभिर्भवितव्यमित्यस्माकमस्ति परमोऽभिलाष॥

पुरस्तादभिवर्धिष्णवः युवकसमुदाया अपि मिथस्सहोदरभाव प्रजाधर्मं च मनसि कृत्वा अस्मदीयायाः प्रीतेर्विषयभूतायाः मातृभूमेश्श्रेयस्साधनाय प्रयत्न कर्तुमर्हन्तीति अपेक्षामहे॥

आत्मीय संकट कण्ठरवेण प्रकाशयितुमशक्नुवता मौनप्राणिना विषये करुणा करणीयेत्येतदस्मिन् सदर्भे सूचयितुमिच्छाम॥

प्रजानां सौख्यमेवास्माकं सौख्यमिति सर्वदा वयं भावयामः, तादृशसौख्यसाधनायानुकूलानि विवेक स्थिरसकल्प सहायसंपदादीन्यस्माकमनुगृह्णात्विति करुणामयं भगवन्त निरन्तरं प्रार्थयामहे॥ इति॥

तदनन्तर च यथेदानी सर्वा प्रजा आनन्दपरिपूर्णा तथा भूमण्डल भमण्डल चाचेतयदपि परिपूरयितुमिव "विजयता श्रीकृष्णमहाराज " इति त्रिकृत्व कृतेन विजयध्वनिना गनन्नद्याद्विध्वनिना च महान् कोलाहलस्समभूत् ॥

तस्मिश्चावसरे युगपदुदितदिनकरसहस्रसदृशतेज पुञ्जापिञ्जरिताया-मस्या महासभाया भद्रासनमध्यासीन श्रीमन्त महाराज पश्यन्तीना प्रजानामस्माक मनासि मन्वादिमहाराजसमुपादिष्टानि भृग्वादिमहर्षि-सगृहीतानि लोकोत्तराण्येतानि वचासि स्मृतिपथमुपगतानि । तानि यथा—

परोक्षा देवतास्सर्वा राजा प्रत्यक्षदेवता ।
राजा माता पिता चैव राजा कुलवता कुलम् ॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वती ॥
यस्मादेषा सुरेन्द्राणा मात्राभिर्निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥
सोऽग्निर्भाति वायुश्च सोऽर्कस्सोमस्स धर्मराट् ।
स कुबेरस्स वरुण स महेन्द्र प्रभावत ॥
बालोऽपि नावमन्तव्य मनुष्य इति भूमिप ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥
यस्य प्रसादे पद्माऽस्ति विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वदेवमयो हि स ॥
कालो वा कारण राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥
कलि. प्रसुप्तो भवति स जाग्रद्द्वापर युगम् ।

कर्मस्वभ्युद्गतस्त्रेता विचरस्तु कृत युगम् ॥
परिपूर्णं यथा चन्द्र दृष्ट्वा हृष्यन्ति मानवाः ।
तथा प्रकृतयो ह्यद्य श्रीमत्कृष्णमहीक्षितम् ॥

अथचाश्रुतदृष्टचर किंचिन्महच्चित्रमाविरभूत् । तदेतत् विशदीकृत्य वयमपि सतोषभारिता भवाम । यथा—तदानी तत्क्षणादेव राजपुरुषै• गुप्तपत्रमेकैक समास्ताराणा सर्वासा प्रजाना करगतमभवत् । उद्धाट्यावलोकिते तस्मिन् पत्रे श्रीमतो महाराजस्य प्रतिकृति परिष्कृताऽवलोकिता । तदाभिमुख्येन हौण कार्णाट तौरुष्क भाषासु तिसृष्वपि तत्तद्भाषानुगुणै प्रकृतिसुन्दरै स्फुटतमै अक्षरैः साक्षात्स्वहस्तलिखितै कश्चिल्लेखोऽप्यवलोकित । एषोऽय तत्रत्योऽभिप्राय सस्कृतभाषामयः अस्माकमप्यवकाशप्रदानायैवेव परिशेषित । तथाहि—

" अस्मदीय राज्यभारस्वीकारसमयमारभ्य पञ्चविंशतितमेन संवत्सरेण परिपूर्णेऽस्मिन् शुभदिवसे अस्मत्प्रीतिपात्रीभूतासु प्रजासु एकैकाऽपि व्यक्ति सुखेन वर्ततामिति हृदयेनाशसमानाः एतादृशीं शुभाभिकाक्षां प्रीतिपुरस्सर प्रकाशयेमहि । प्रयतेमहि च सतत यावज्जीव अस्मत्प्रजानां सुखसंपदोऽभिवर्धयितुम् । अस्माक जीवितकाले, राज्यपरिपालनकाले च परम लक्ष्यभूत तमिमं प्रयत्न सफलयितुं अनुगुणा बुद्धिशक्ति कायशक्ति च सर्वशक्तो भगवाननुगृह्णात्विति प्रार्थयेमहि " इति ॥

इमं च लेखमिममभिप्रायं साक्षात्प्रकाशयन्तीमिव परिदृश्यमानां च प्रतिकृतिं विमृशतामस्माकं भगवतो वासुदेवस्य भगवतो दाशरथेश्च हृदयास्थित एवाभिप्राय' श्रीमन्महाराजस्यापि हृदयास्थित इव विज्ञानचक्षुषा साक्षादक्रियत ॥

एषोऽय तयो. हृदि विद्यमानोऽभिप्राय — "मन्मना भव मद्भक्तो मद्याजी मा नमस्कुरु" इति भगवद्गीता । तत्र भाष्यम्— आराधन नाम परिपूर्णशेषवृत्ति । आत्मान्तमतिमात्रप्रह्वीभावव्यवसाय. तत्पर्यवसानम् । आत्मसमर्पणमिति यावत् । इति ॥

तथा—श्रीमद्रामायणे—

इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्त परिषस्वजे ।
हनूमन्त महात्मान कृतकार्यमुपागतम् ॥

तथाच प्रीतिरात्मनिवेदनान्ता इति हृदयम् ॥

इति ॥

पूर्वापरावमर्शे तु शब्दोऽन्या कुरुते मतिम् ।
किंतु लोकोत्तर वाक्य नैकतात्पर्यगर्भितम् ॥

नात.पर किमपि नोऽपिच नाथनीय
सौवर्ण रात्न मुखभाविमहोत्सवेषु ।
सिद्ध्यन्तु राजतमहोत्सववत् प्रमोदा.
भूयोऽपि पुण्यपरिपाकवशात् प्रजानाम् ॥

॥ इति सर्व भद्रम् ॥

॥ श्री ॥

## श्रीमन्महाराज संस्कृतपाठशालावृत्तान्तः

अस्मिन् संवत्सरे नवरात्रमहोत्सवसमये श्रीश्री शृङ्गगिरिसंस्थानाधीश्वराः वेदमार्गेत्यादि विविध बिरुदालङ्कृता जगद्गुरवः

स्वामिनः अस्यां पाठशालायामेव प्रायस्त्रिसप्ताह सान्निध्याय सर्वान् विदुषः विद्यार्थिनः परीक्षायामुत्तीर्णान् विद्वत्कल्पांश्चानुगृहीतवन्त इत्येतत्पाठशालानुबन्धिनामखिलानां परममामोदनिदानम् ॥

अपरंचेदमामोदस्थानम्—श्रीमन्महाराजास्थान्या महाविद्वत्पदेन समलंकृताः बेंगळूरु शृंगगिरिपाठशालायां आध्वरमीमांसाशास्त्राध्यापकाः पूर्वोत्तरमीमांसाद्यनेकशास्त्रप्रवीणा वैद्यनाथशास्त्रिण अद्य नवरात्रमहोत्सवसभायां "मीमांसारत्नम्" इति बिरुदेन रत्नवलयराङ्कवाद्यनेक बहुमानसमन्वितेन विभूषिता इति ॥

## एतत्संवत्सरीय संस्कृत विद्वत्परीक्षा वृत्तान्तसंग्रहः

यथापूर्वमस्मिन्नपि वत्सरे संस्कृत विद्याभिवर्धक महासमितिद्वारा विद्वत्परीक्षा प्रवर्तिता । तत्र प्रार्थनापत्रिकां प्रहितवतां संख्या षट्चत्वारिंशत् । परीक्षितानां संख्या त्रिंशत् । उत्तीर्णानां संख्या पञ्चविंशतिः । तत्रापि प्रथमकक्ष्यायामुत्तीर्णाः एकादशसंख्याकाः ॥

तत्र विशेषपारितोषिकार्हाः पुनरेते—

मैसूरु महापठशाला विद्यार्थिन श्री॥ ह. सुब्रह्मण्यघनपाठिन·—

श्री॥ धर्मप्रवृत्त धर्माधिकारि नर्विन रामानुजाचार्यपरिकल्पितस्य वेदपारितोषिकस्य ५० रूप्यात्मकस्यार्हा. बभूवु. ॥

तथा

श्री॥ नटेशघनपाठिनः— श्री॥ अरमने खासाक्कात्विक् गोमट श्रीनिवासज्यौतिषिकपरिकल्पितवेदवेदान्तपारितोषिकस्य ५० रूप्यात्मकस्य सुवर्णशृङ्खलाभरणस्य पात्र बभूवु ॥

तथा

श्री॥ आर्. रामशास्त्रिणः—श्री॥ काची कामकोटि पीठाधिपत्यनुगृहीतमद्वैतवेदान्तपारितोषिक ५० रू सुवर्णहस्ताभरणमेकम्, श्री॥ धर्माधिकारि विद्याविशारद कुणिगलु रामशास्त्रिपरिकल्पिताद्वैतवेदान्तपारितोषिक ५० रू द्वितीय, मुसाहेब् गगाधररायनामाङ्कितमद्वैतवेदान्तपारितोषिक ६० रू. सुवर्णपदक तृतीय, रायबहदूरु आर्काट्टु श्रीनिवासाचार्यनामाङ्कित मुजरायिसेक्रिटेरियद् म॥ रा॥ कन्दसामिनायकमहाशयस्य वेदान्तपारितोषिक ५० रू. सुवर्णशृङ्खलाभरणं तुरीयम्, ए. जि कृष्णस्वामिरायनामाङ्कित ६० रू. सुवर्णपदक पञ्चमं. कडवद पटेल् म॥ रा॥ हुच्चवीरेगौडमहाशय वेदान्तपारितोषिक ६० रू. सुवर्णपदक षष्ठम्, रिटैर्ड् एक्सैज्कमीषनर् म॥ रा॥ बेळवाडि रामस्वामय्यमहाशयीयाद्वैतवेदान्तपारितोषिक ६० रू. सुवर्णपदक सप्तमं चेति सप्तबहुमानान्यलभन्त ॥

तथा

श्री॥ विद्वान् एंत्रार् नरसिंहाचार्याः—रिटैर्ड् चीफ् इंजिनीयर् राजसभाभूषण म॥ रा॥ कर्पूर श्रीनिवासरायमहाशयीयन्यायशास्त्रपारि-

तोषिक शतरूप्यात्मकमेकं रिटैर्ड् डेप्युटि इन्स्पेक्टर् म॥ रा॥ एस् रंगाचार्यकल्पित वेदान्तकृष्णमाचार्यनामाङ्कित तर्कवेदान्तपारितोषिकं ५० रूप्यात्मकं द्वितीयं च समार्जयन् ॥

तथा

श्री॥ नुग्गेयहळ्ळि आर्. टि श्रीनिवासशास्त्रिण –धर्माधिकारि पण्डितरत्न तर्कतीर्थ कस्तूरि रंगाचार्यनामाङ्कित प्राचीनन्यायपारितोषिकं ५० रू श्री॥ महाविद्वान् तिरुवळ्ळूरु श्रीनिवासराघवाचार्यीय विशिष्टाद्वैतवेदान्तपारितोषिकं ५० रूप्यात्मकं चाप्नुवन् ॥

तथा

पाठशालापण्डिता..विद्वान् श्री॥ ति॥ स॥ कृष्णदेशिकाचार्याः– विद्वान् पेरियस्वामि तिरुमलाचार्यनामांकितं साहित्य पारितोषिकमेकं ६० रूप्यात्मकं, धर्माधिकारिचक्रवर्त्यय्यगार्यनामांकित साहित्य व्याकरण पारितोषिकं ५० रू. द्वितीयं च गृहीतवन्त ॥

श्री॥ उडुपि वेंकटरमणाचार्या — रिजमेंट्दार् कृष्णरायीयद्वैतवेदान्त पारितोषिकं ५० रूप्यात्मकं प्राप्तवन्तः । एवंरीत्या विशेष पारितोषिक विनियोग ॥

---

# श्रीमन्महाराजसन्निधानीय संभावना प्रकारः

| संख्या | नामधेयम् | शाखनाम | अध्ययनस्थलम् | समान बहुमानाः | विशेष |
|---|---|---|---|---|---|
| | | मध्यमपरीक्षा | | | |
| 1 | वेंकटरामन् | ऋग्वेद | मैसूरु महापठशाला | 50 | |
| 2 | केशवशिवन् | ,, | ,, | 50 | |
| 3 | वासुदेवघनपाठी | शुक्ल यजुर्वेद | कांजीवरं पाठशाला | 50 | |
| 4 | वांछेश्वरशर्मा | ,, | वैगनल्लूर् | 50 | |
| 5. | शिवरामकृष्णशर्म | ,, | ,, | 50 | |
| 6 | सा रामनाथ घनपाठी | कृष्ण यजुर्वेद | मायवरं | 50 | |
| 7 | वि वि. महालिंग घनपाठी | ,, | तिरुवादि | 50 | |
| 8 | अंबुनाथ .... | ,, | रायवर वेदपाठशाला | 50 | |
| 9 | रामचन्द्रशास्त्री | ,, | विळावार्क | 50 | |
| 10 | वेंकटकृष्ण जटावल्लभ | ,, | पालघाट् | 50 | |
| 11 | एस् सुब्रह्मण्यन् | सामवेद | मैसूरु महापाठशाला | 50 | |
| 12 | म श्रीनिवास वरदाचार् | साहित्य | मैसूरु | 50 | |
| 13 | एस् के रंगस्वामय्यंगार् | विशिष्टाद्वैत | मैसूरु [illegible] पाठशाला | 50 | |

| संख्या | नामधेयम् | शास्त्रनाम | अध्यायनस्थलम् | सम्मान द्रव्यम् | विशेष |
|---|---|---|---|---|---|
| 14 | यु. वेंकटरमणाचार्य | व्रत | उडुपि | 100 | |
| 15 | वैद्यनाथशास्त्री | शुक्ल यजुर्वेद | वैगनल्लूर् पाठशाला | 40 | |
| 16 | रामसुब्रह्मण्यशर्मा | ,, | | 40 | |
| 17 | लक्ष्मीनारायण घनपाठी | कृष्ण यजुर्वेद | शास्त्रापल्लि | 40 | |
| | | उत्तमपरीक्षा | | | |
| 18 | ति स कृष्णदेशिकाचार्य | साहित्य | मैसूरु | 100 | |
| 19 | पि. सीताराम उडुपि | व्याकरण | मैसूरु महापाठशाला | 100 | |
| 20 | आर् टि श्रीनिवासशास्त्रि | प्राचीनन्याय | तुग्गेहळ्ळि | 100 | |
| 21 | पवार् नरसिंहाचार् | नवीनन्याय | मैसूरु महापाठशाला | 100 | |
| 22 | आर् रामशास्त्री | अद्वैत वेदान्त | ,, | 100 | |
| 23 | चन्नावधानी | ऋग्वेद श्रौतभाग | बेंगळूरु | 60 | |
| 24 | ह सुब्रह्मण्य घनपाठी | कृष्णयजुर्वेद सलक्षण घनान्त | मैसूरु महापाठशाला | 60 | |
| 25 | नटेशघनपाठी | ,, | ,, | 60 | |

तत्प्रत्यक्षं, मतीन्द्रियार्थसंबन्धे या पुरुषस्य बुद्धिः जायते तत्प्रत्यक्षम्। भविष्यंश्चैषोऽर्थो न ज्ञानकालेऽस्तीति। सतश्चैतदुपलम्भन नासतः। अतः प्रत्यक्षमनिमित्तम्॥

धर्म प्रत्यनिमित्तत्व येन लिङ्गेन लक्ष्यते तल्लक्षणक तद्धर्मक प्रत्यक्ष, स च धर्म. विद्यमानोपलम्भनत्व नामास्ति, तेन प्रसिद्धेन लिङ्गेन अनिमित्तता गम्यत इत्यर्थः। अत्र लक्षणशब्दश्रवणात् प्रत्यक्षस्य स्वरूपं तेन लक्ष्यत इति लक्षणवाचोयुक्तिरित्यभिप्रेत्य लक्षणस्य विधानमनुवादो वेति भ्रान्तिर्भवदासस्य॥

नन्वनिमित्तत्वपक्षेपि सत्संप्रयोगजं प्रत्यक्षमित्येव वचनव्यक्ते अस्त्येवाभासेऽतिव्याप्तिरितिचेन्न—यत्प्रत्यक्ष . तदेवरूपत्वादनिमित्तमिति वचनव्यक्तिः। एवंरूपत्वं च लोकसिद्धम्। यदन्यदपि तथाविधमस्ति मृगतृष्णादिज्ञान तदपि भवत्वनिमित्त, न तु तस्य प्रत्यक्षत्वापत्तिरिति॥

न हि भावनाबलज प्रत्यक्षं नाम संभवति। भावना हि समानविषया विजातीयाव्यवहिता स्मृतिसंततिः। स्मृतिश्च पूर्वानुभूत विषयिणी नाननुभूतं गोचरयति। तद्यदि धर्मः प्रमाणान्तरेणानुभूत. किं भावनया। यदि नानुभूतः कथ शक्यः भावयितुम्। इति भावनाबलजप्रत्यक्षनिराकरणप्रकार॥

वैशेषिकास्तु प्रातिभाख्यप्रमाणान्तरगम्यत्वं धर्माधर्मयोर्मन्यन्ते। तच्च प्रमाणं लोकेऽपि क्वचिदस्ति। यथा—श्वो मे भ्राताऽऽगन्तेति। बाहुल्येन तत् ऋषीणामेवेत्यार्षमित्युच्यते इति। तदपि श्रद्धामात्रम्—यतोऽस्मदादिप्रतिभा लिङ्गाद्याभासजन्या प्रत्यक्षादिकमनपेक्ष्य स्वातन्त्र्येणार्थमनिश्चाययन्ती नैव प्रमाणं, तथा योगिनामपीति॥

भविष्यन्निति॥ अयं भावः—धर्मो न प्रत्यक्षः भविष्यत्त्वात्

अनागतादिवृष्टिवदिति हेतुरत्राभिप्रेतः । अत एव भाविन धर्म प्रमाणेन प्रतीत्यानुतिष्ठन्ति शिष्टाः ॥

ननु भविष्यदवस्थाया धर्मो मा भूत्प्रत्यक्ष । यदा त्वसौ निष्पन्नः तदा किं न प्रत्यक्ष इति चेत्, अनुष्ठितोऽपि धर्मो नैव प्रत्यक्षः । फलसाधनरूपेण हि यागादीनां धर्मत्वम् । न च यागस्वरूपकाले तत्साधनत्व वर्तते, फलस्य चिरभाविनस्तदानीमाक्रियमाणत्वात्, यदा तु फल निष्पद्यते तदा यागश्चिरविनष्टः न तत्साधनरूपेण शक्यते प्रत्यक्षयितुम् । अपूर्वलक्षणा शक्तिस्तु अतीन्द्रियैवेति ॥

अत्र सता सम्प्रयोग इति भवदासीयवृत्तेरुपरि धर्मकीर्तिराक्षिपति यथा —

सदित्यसद्व्युदासाय न नियोगात्स गंस्यते ।
संप्रयोगो हि नियमात्सत एवोपपद्यते ॥

इति । अत्र सद्ग्रहणमनर्थक, असता संप्रयोगासभवादेव असद्व्युदाससिद्धे, इति । सोऽयमाक्षेपः सतीन्द्रियार्थसवन्धे इति कर्मधारय दर्शयता भाष्यकृता परिहृतः । सतीति निमित्तसप्तम्यभिधानात्, अतीतस्यानागतस्य वा सप्रयोगस्य निमित्तत्वासंभवात् । तादृशसंप्रयोगजनितं अतीतानागतादिविषय अनुमानयोगिप्रत्यक्षादिकं निराकृत वेदितव्यम् ॥

संप्रयोग इत्यत्र सशब्द सम्यगर्थक. शुक्तीन्द्रियसबन्धलक्षणदुष्प्रयोगनिवारणार्थं । एवमवयवव्याख्यायां लक्षणस्यादुष्टत्वेन लक्षणानुवादैनैवानिमित्तता शक्या विधातुम् । भवदासेन तु सता संप्रयोग इत्युक्त्वा संप्रयोगशब्दश्च सकलसंबन्धपरो व्याख्यात । अतस्तस्यानुमानेषु आभासेषु चातिव्याप्तिरुक्ता, नास्मिन् व्याख्याने इति विशेषः ॥

यदपि बौद्धै प्राप्तिवचनं संप्रयोगशब्दं मत्वा श्रोत्रचक्षुषो-

रप्राप्यकारित्वात् सत्संप्रयोगजत्वलक्षणमव्याप्तम्—"सान्तरग्रहणं न स्यात्प्राप्तौ स्थानाधिकस्य वा" । इत्युक्तम् । अयमाशयः—प्राप्तौ चक्षुश्रोत्रयो प्राप्यकारित्वे सान्तरग्रहण दूरे शब्द दूरे अर्थ. इत्याकारकोऽनुभव न स्यात् प्राप्तौ दूरत्वासंभवात् । नचात्मापेक्षया दूरत्वम्, तस्य विभुत्वाभ्युपगमात् । तथा कर्णशष्कुलीनयनगोलकरूपेन्द्रियाधिष्ठानापेक्षया अधिकपरिमाणानां विभूनां शब्दाना महीमहीधरादीनां च ग्रहणं न स्यात् । न ह्यल्पेन महता प्राप्ति. प्राप्य कारित्वगिन्द्रियाधिष्ठानेन हस्तादिना तावत्परिमाणदेशमात्रग्रहणादिति ॥

तन्मतमपि सम्प्रयोगशब्दस्य व्यापारमात्रवाचित्वात् अर्थार्जवेनावस्थानवाचित्वाद्वा कार्यगम्यशक्तिलक्षणसंबन्धवाचित्वाद्वा प्रदीपप्रभावत् पृथ्वग्रवृत्त्यभ्युपगमाद्वा साख्यादिसिद्धान्तानुसारेण इन्द्रियाणामाहकारिकत्वेन विभुत्वाभ्युपगमाद्वा परिहृत वेदितव्यम् । नचाधिष्ठानमेवेन्द्रियं, तत्र चिकित्सादिप्रयोगादिति वाच्यम् । अस्य प्रयोगस्य अधिष्ठानसंस्कारत्वेऽपि आधेयोपकारकत्वात् । अप्राप्यकारित्वे हि अतिदूरस्थस्य व्यवहितस्याप्यर्थस्य ग्रहणप्रसग. । यथा सर्वगतमप्यात्मान शरीरान्तरवस्थितमेव प्रतिपत्तारो मन्यन्ते तथेन्द्रियमपि गोलकादिप्रदेश एव । अतः शरीरापेक्षया गोलकाद्यपेक्षया वा विच्छेदबुद्धेः सान्तरग्रहणम् । शब्दस्तु विभुत्वात् श्रोत्रदेश एव गृह्यते । महान् शब्दः दूरे शब्दः इत्यादिप्रत्ययस्तु व्यञ्जकनिबन्धन । तस्मादिन्द्रियाणि भौतिकान्येव प्राप्यकारीणीति च नैयायिकानामिव मीमांसकानामपि सिद्धान्तः । श्रोत्र तु दिव्यमिति विशेषः ॥

बुद्धिजन्मेति सूत्रम्, या बुद्धिर्जायत इति तस्य भाष्यम् । कर्तृवचनोऽयं जन्मशब्दः बुद्धिसमानाधिकरणः । तथा च जायमाना बुद्धिरित्यर्थलाभ । कीदृशी पुनरस्याः जननक्रिया? यस्यां कर्तृत्व-

बुद्धिर्वा जन्म वा सन्निकर्षो वेति नैषां कस्यचिदवधारणार्थमेतत्सूत्रं, सतीन्द्रियार्थसंप्रयोगे नासतीत्येतावदवधार्यते। अनेकस्मिन्नवधार्यमाणे भिद्येत वाक्यम् ॥

मिति चेत्—उपादानकारणदशाविशेष एव जन्म, यदनन्तरं कार्यस्य सत्ता। तस्यापि दशाविशेषस्य ततः प्राच्यवस्थैव कारणम्। ततः प्रागपि तथेत्यनादिरेषा आगन्तुककार्यकारणपरम्परा। प्रकृते चोपादानकारणमात्मा। तद्दशाविशेष एव सूक्ष्मः व्यापारः बुद्धिरुच्यते। तदेव च जन्मेत्यप्युच्यते इति। तस्यात्मनोवस्थालक्षण विकार. अङ्गीक्रियते। तादृशविकारमात्रेण वस्तु न नश्यति कुण्डलादिषु सुवर्णवदिति सिद्धान्तः। एतेन वैशेषिकोक्तः कारणे कार्यसमवाय एव जन्मेति वादोऽपास्तः। समवायस्य नित्यत्वेन अक्षानधीनत्वात् प्रत्यक्षत्वानुपपत्तेः। निरुक्तोपादानकारणस्य दशाविशेषलक्षण व्यापाररूपं जन्मैव अर्थप्रकाशनफलविशेषरूपत्वात्प्रमा। तद्योगात् धी. प्रमाणम्।[1] जायमानत्वविशेषणात् भूता भविष्यन्ती च बुद्धि. व्यावर्त्यते ॥

अथानेन सूत्रेण किं प्रत्यक्षप्रमाणमित्यवधारितमित्यत्राह—बुद्धिर्वेत्यादि। बुद्धिर्वा जन्म वा इन्द्रियं वा इन्द्रियार्थसन्निकर्षो वा इन्द्रियमनस्संयोगो वा आत्ममनस्संयोगो वा समुच्चितस्सर्व एव वा भवतु प्रत्यक्षं प्रमाणं, नात्रास्माकमादरः, किंतु सन्निकर्षावधारणार्थमिदं सूत्रं, सर्वथाप्यनिमित्तत्व विद्यमानोपलम्भनत्वेन प्रसाधयितुमिति भावः। प्रमाणफलं तु सर्वत्र ज्ञानमेव, सुषुप्त्यादाविन्द्रियव्यापाराभावे ज्ञाना-

[1] भूतिर्येषा क्रिया सैव कारकं सैव चोच्यते। इति यत्सौगतवचनमुदाहृत पातञ्जलयोगभाष्यटीकाया तुरीयपादे २० सूत्रे वाचस्पतिमिश्रै. तदर्थ एवात्र कुमारिलैश्शी कृत ॥

नुदयात् सतिचोन्मीलनादिव्यापारे ज्ञानोदयात् व्यापाराधीनता ज्ञानरूपफलस्यावधार्यते ॥

अत्र केचित् सर्वत्रैव तावत् इन्द्रियार्थसम्प्रयोगादनन्तरं आनिश्चयात्मिका बुद्धिः आलोचनमात्ररूपा जायते। सा च पश्चान्निश्चयात्मकं ज्ञानं प्रसूते। तत्रालोचनं विशेषणज्ञानलक्षणं प्रमाणं, तस्य तु निश्चयः विशेष्यज्ञानलक्षणः फलम्। यदा तु विशेष्यबुद्धिरेव प्रमाणं तदा हानोपादानादिबुद्धय तन्मूलेष्टसाधनतादिस्मृतिर्वा फलमस्तु नात्राभिनिवेश इति वदन्ति ॥

वैभाषिका पुनरेवमाहुः—

कल्पनापोढमभ्रान्तं प्रमाणं निर्विकल्पकम्।
विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः[1] ॥

इति। सर्वं च वस्तु नीलपीतादिकं केवलं विशेषलक्षणमेव। तच्च स्वलक्षणमित्युच्यते। तस्मिन् द्रव्यगुणकर्मसामान्यसंज्ञात्मकानि पञ्च कल्पितानि भवन्ति। तानि न वस्तूनि केवलमुपप्लवः वासनामात्रम्। स्वलक्षणमात्रविषयकं निर्विकल्पकं, तदेव प्रमाणम्। विकल्पं सविकल्पकं। अवस्तुनिर्भासात् कल्पितवस्त्ववगाहनात् असंवादात् संवादाभावाच्च उपप्लवः वासनामात्रं अप्रमाणमित्यर्थः ॥

तच्च प्रमाणं प्रत्यक्षरूपं चतुर्विधम्—इन्द्रियजं मानसं आत्मसंवेदनं भावनाबलजं चेति। आद्यं नीलपीतादिविषयकं निर्विकल्पकम्। द्वितीयं तु यत्नाथभिकं इन्द्रियजं स एव समनन्तरप्रत्यय

[1] इदं च धर्मकीर्तिवचनम्, दिङ्नागवचनं तु—प्रत्यक्षं कल्पनापोढं नामजात्याद्यसंयुतम् इति लक्षणमिति अभ्रान्तपदाघटितमिति—विधिविवेक न्यायकणिकाकृद्दर्शित ॥

मन इत्यप्युच्यते, तन्मात्रजनितः प्रत्यय· मानसः नैयायिकसम्मतानुव्यवसायस्थानीयः। तृतीय सर्वचित्तचैत्ताना आत्मसंवेदनम्। तुरीयं योगिज्ञान अतीतानागतादिविषयम्। तादृशकल्पनापोढलक्षणस्य योगिप्रत्यक्षस्य धर्माधर्मगोचरतेति ॥

अत्र भावनाबलज ज्ञान स्मृतिरेव। अनुभूतविषयत्वाद्भावनाया,। तेन प्रामाण्यमेव नास्ति न तरां प्रत्यक्षत्व न तमां धर्मं प्रति निमित्ततेति। किंच श्रेयस्साधनता हि धर्मता, सा चावश्यमिदमस्य साधनमिति विकल्पैव ग्रहीतव्या। विकल्पश्चाप्रमाणमिति सम्मतम्। विवृतमेतत्पुरस्तादेवेति ॥

इदमत्र सौत्रान्तिकमतम्—यो ज्ञानस्य विषयाकार· नीलपीतादिरूपेणार्थेनाहित स प्रमाणम्। तन्निबन्धनत्वान्नीलपीतादिव्यवस्थायाः। स्वसंवित्तिस्तु फलम्। बाह्यार्थः प्रमेयमिति। यदाहु—

विषयाकार एवास्य प्रमाण तेन मीयते।
स्वसंवित्ति· फल चास्य तद्रूपे ह्यर्थनिश्चय ॥

इति। अत्र स्वसवित्तिरूपः स्वयप्रकाश· शून्यवादे निरस्यते। किंच विषयाकारो हि प्रमाणम्, प्रमाण च प्रमेयविषयम्। नीलादिक च प्रमेयमिति विषयाकारो विषयविषय·। स्वसावित्तिस्तु विज्ञानविषयेति विषयभेद· अपरो दोष· ॥

इदं योगाचारमतम्-- ते हि बाह्यार्थमपलपन्तः ज्ञानस्यैवानादिवासनोपप्लावित· नीलपीतादिविषयाकार· प्रमेयम्। स्वाकार· प्रमाणम्। स्वसंवित्तिः फलमिति मन्यन्ते। यदाहुः—

यदाभास प्रमेयं तत् प्रमाणफलते पुनः।
ग्राहकाकारसंवित्त्योः त्रयं नातः पृथक्कृतम् ॥

इति। अत्रापि स्वसंवित्तिर्निषेत्स्यते। किं च—यश्चाय स्वाकारः

**प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति ॥**
**अभावोऽपि नास्ति यतः—**

प्रमाणत्वेन कल्पितः सोऽपि स्वसंवित्तेरन्यो नावगम्यते, स्वसंवित्तिरेव ज्ञानाकार इति दोष. स्फुट एव ॥

नन्वत्रसूत्रे विषयानुपादानात् न्यून लक्षणमिव भाति । सौगतैर्विशेषमात्राविषयत्वं प्रत्यक्षस्योक्त, वेदान्त्यादिभि सामान्यमात्रविषयत्वमुक्त, को वा भवता विषय इति चेत्, यदेव योग्यं संबद्ध च सामान्यं विशेषो वा तत्सर्वं ग्राह्यमित्यभ्युपगमात् न विषयविशेषकथनेन प्रयोजनमिति ॥

एवं प्रत्यक्षस्यानिमित्तत्वकथनमनुमानादीनामप्युलक्षणं न्यायसाम्यादित्यभिप्रायेण तेषामानिमित्तत्वमुपपादयति—प्रत्यक्षपूर्वकत्वेत्यादिना ॥ धर्मस्याप्रत्यक्षत्वेन तल्लिङ्गं तत्सदृश वा ग्रहीतुमशक्यमिति नानुमानादेर्निमित्ततेत्यर्थ. । ननु जगद्वैचित्र्यस्यान्यथाऽनुपपत्त्या अदृष्टं कारणमस्तीति अर्थापत्त्या धर्मस्य सिद्धिरिति चेत्, न — पुण्यपापरूपादृष्टाभ्युपगमेऽपि तयोस्स्वाभाविक अभ्युदयप्रत्यवायजनकशक्तिवैचित्र्यमभ्युपगन्तव्यं, तदपेक्षया लाघवात् जगद्वैचित्र्यमेव स्वाभाविकमभ्युपगम्यतामित युक्तिसभवात् । किंच — दु खसाधनमधर्मो ब्रह्महत्यादिः सुखसाधन धर्म अग्निहोत्रादि सुखेपीदं स्वर्गसाधनं इदं पशुसाधनमिति यावत्फलविशेष प्रति धर्माधर्मौ न विभज्येते तावत् किमप्यदृष्टमस्तीत्येतावदर्थापत्तिज्ञानं नोपयुज्यते । तस्माद्धर्मे नार्थापत्तिरपि निमित्तमिति॥

एवं प्रत्यक्षाद्यनिमित्तत्वोपपादनेन चोदनेवेति प्रतिज्ञामुपपाद्य प्रमाणमेवेति प्रतिज्ञां निर्वोढुं अनुपलब्धिप्रमाणनिमित्तत्वशङ्कानिराकरणपरतया औत्पत्तिकसूत्रमवतारयति—अभावोऽपीति ॥ अत्र यद्यपि

औत्पत्तिकस्तु[1] शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥

शब्दातिरिक्तसमस्तसदुपलंभकप्रमाणास्तमये हि अभावशङ्कानिराकरणाय शब्दप्रामाण्यावतारणं युक्तम्, नचेह तथास्ति। इदं प्रपातटाकादिकं पुण्यं अगारदहनादिकमपुण्यमित्येवमुपकारापकारलक्षणपीडानुग्रहौ विश्वविदितौ। अयमंशो व्यासेनाप्युक्त —

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये।
आचण्डालं प्रसिद्धे सत्यल्पं शास्त्रप्रयोजनम् ॥

इति। तथापि प्रसिद्धिः न स्वातन्त्र्येण प्रमाणं, अव्यवस्थितेः, तथाहि संसारमोचकादीनां हिंसा पुण्यं। शाक्यादीनामहिंसा परमो धर्म। म्लेच्छादीनां प्रसिद्धिर्विलक्षणा। आर्याणां प्रसिद्धौ इतरापेक्षया न विशेषो दृश्यते। अतः निर्मूलाया प्रसिद्धेः अयोगात् मूले निरूप्यमाणे किं भ्रान्तिः मूलं? उत प्रत्यक्षादिः? आहोस्वित् चोदना? इति विचारः प्रवर्तते। नाद्यः—विश्ववृत्तिविरोधात्—विश्वे हि विद्वांसः अनादेः कालात् धर्ममनुतिष्ठन्तः अधर्मं च परिहरन्तो दृश्यन्ते, तस्मात्प्रसिद्धेः भ्रान्तिमूलकत्वकल्पनमतितमां सप्ताहम् ॥

न द्वितीयः—प्रत्यक्षादिचतुष्टयानिमित्तत्वस्योक्तत्वात्। तृतीयेऽपि पक्षे अनुपलब्धिः शब्दश्चेति द्वयमवशिष्यते। अत्राभावमुखे निपतितौ धर्माधर्मौ यदि चोदना न शक्नुयात्समुद्धर्तुं तदा पश्यतामेव सर्वेषां तेनाभावेन तौ ग्रस्तावेव भवेताम्, अतो युक्तमभावनिराकरणाय शब्दप्रामाण्यावतारणम् ॥

---

[1] ध्वन्यालोकव्याख्याने—अभिनवगुप्तविरचिते तृतीयोद्द्योते—"औत्पत्तिकोऽत्र जन्मना द्वितीयो भावविकारः सत्तारूपः सामीप्याल्लक्ष्यते। विपरीतलक्षणातो वा व्याप्तिः। इत्यादौ औत्पत्तिकशब्दो नित्यपर्याय" इति दृश्यते। १९८ पु ॥

**औत्पत्तिक इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुक्तश्शब्दार्थयोः भावः संबन्धः। नोत्पन्नयोः पश्चात्संबन्धः। औत्पत्तिकश्शब्दस्यार्थेन संबन्धः तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य॥**

औत्पत्तिक इति नित्यं ब्रूम इति॥ औत्पत्तिकशब्दं नित्यरूपार्थे प्रयुञ्ज्महे इत्यर्थः। प्रयोगनिमित्तं दर्शयति-उत्पत्तिर्हीति॥ भावः स्वभावः। अवस्थाविशेष एव उत्पत्तिः। सा च वस्तुनः स्वभावेन नियतसहचरितेति साहचर्यनिबन्धना लक्षणा। उत्पत्तिरेवौपत्तिकः स्वाभाविकः नित्यः न सामयिक इति यावत्। अत्र स्वपदं विहाय भावपदनिर्देशः अभावोऽपि नास्तीति प्रागुक्ताभावपदकटाक्षेण। फलितार्थमाह—अवियुक्तश्शब्दार्थयोः भावस्संबन्ध इति॥ अवियुक्तत्वं व्यतिरेकनिषेधेन द्रढयति—नोत्पन्नयोरिति॥ तस्येत्यन्तस्य सूत्रस्यार्थमाह—औत्पत्तिकश्शब्दस्येति॥ संबन्धः वाच्यवाचकभावः शक्तिलक्षणः। निमित्तमिति पदाध्याहारः। औत्पत्तिकस्संबन्धो निमित्तमित्युक्तं भवति॥

ननु शब्दस्य साक्षान्निमित्तत्वे वक्तव्ये तच्छक्तेः निमित्तत्वकथनं कुत इति चेत्, शब्दः स्वरूपेण न प्रमाणम्, प्रत्ययान्तरं पुरुषान्तरापेक्षादर्शनात्, शक्तेस्सामयिकत्वसंशयात्, स्वाभाविक्यास्तु शक्तेः प्रामाण्ये निरपेक्षत्वं सिध्यति, तन्निबन्धन एव च शब्देऽपि प्रामाण्यव्यवहार इत्यर्थाविष्करणायेति। एतेनौत्पत्तिकपदेन कारणदोषाधीनमप्रामाण्यं निरस्तं भवति। वर्णात्मकश्शब्दो नित्यः जात्यात्मकश्चार्थो नित्यः। वाच्यवाचकभावलक्षणस्संबन्धोऽपि नित्यः नात्र कश्चिदपि पौरुषेय इति भावः॥

कथम्? उपदेशो हि भवति। उपदेश इति विशिष्टस्य शब्दस्योच्चारणम्। अव्यतिरेकश्च ज्ञानस्य। न हि तदुत्पन्नं ज्ञानं विपर्येति। यच्च नाम ज्ञानं न विपर्येति न तत् शक्यते वक्तुं नैतदेवमिति। यथा विज्ञायते न तथा भवति। यथैतन्न

शब्दशक्तेरेव निमित्तत्वे हेतुं प्रश्नपूर्वकमाह—कथम्? उपदेशो हि भवतीति॥ उपदेश इत्यत्र धात्वर्थमाह—उपदेश इति॥ प्रत्ययस्य घञः कर्म अर्थः। उच्चार्यमाणो विशिष्टश्शब्द इत्यर्थः। ज्ञानं ज्ञायतेऽनेनेतिव्युत्पत्त्या प्रमितिकरणमित्यर्थः। शब्दस्य विशेषणमेतत्। तस्येत्यस्यानुषङ्गः। तथा च—यत शब्देन विशिष्टेन धर्मस्य प्रमितिरुदेति तत सबन्धो निमित्तमित्युच्यते इति वाक्यार्थः। एतेन अज्ञानरूपमप्रामाण्यं निरस्तं वेदितव्यम्। अत्र धात्वर्थविवरणेन सर्वोऽपि जनः शब्दस्योच्चारयिता न तु जनयितेति हृदयं सूच्यते॥

अथ विपर्ययलक्षणमप्रामाण्यं निरस्यति—अव्यतिरेकश्च ज्ञानस्येति॥ ज्ञानस्येत्यध्याहारः। प्रमितिकरणरूपज्ञानपदार्थघटकप्रमिति तदर्थः। अनुपलब्धेऽर्थे इति पदे विचेते। ततश्चानुपलब्धेऽर्थे अव्यतिरेकः प्रामाण्यव्यतिरेकहेतोः अर्थव्यभिचारस्याभावः भवतीत्यर्थः। सर्वस्यापि प्रमाणस्यानुपलब्ध एवार्थे प्रामाण्यम्। अन्यथा स्मृतिः स्यात्। तदेव च अनधिगतार्थगन्तृत्वम्। तदपि स्वसमानविषयकज्ञानानपेक्षोत्पत्तिकत्वमिति निर्वक्तव्यम्। तेन धारावाहिकज्ञानस्य द्वितीयादिज्ञानस्य अनुमित्यादेश्च संग्रहः। तेन स्मृतिलक्षणमप्रामाण्यं निरस्तम्॥

व्यतिरेकाभावं प्रदर्शयति—न हीत्यादिना॥ नैतदेवमिति॥ बाधितमित्यर्थः। तस्य विवरणं—यथाविज्ञायत इति॥ पुरुषदोषमाह—

विज्ञायते नथैतदिति । अन्यदस्य हृदये अन्यद्वाचि स्यात् । एवं वदतो विरुद्धमिदं गम्यते अस्ति नास्ति वेति । तस्मात्तत्प्रमाणं अनपेक्षत्वात् । न ह्येवं सति प्रत्ययान्तरमपेक्षितव्यं पुरुषान्तरं वाऽपि । स्वयंप्रत्ययो ह्यसौ । बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते बादरायणं पूजयितुम्, नात्मीयं मतं पर्युदसितुम् ॥

वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयाचकार तस्य निमित्त-

अन्यदस्य हृदय इति ॥ एवं चानपोदितं स्वारसिकं प्रामाण्यमित्याह तस्मादिति ॥ पुरुषदोषस्य अज्ञानस्य बाधस्य स्मृतित्वस्य एवमादेः कस्याप्यप्रामाण्यकारणस्याभावादित्यर्थः । अनपेक्षत्वं विवृणोति—नह्येवमिति ॥ अनाप्तवाक्ये संवादिप्रत्ययान्तरापेक्षा । आप्तवाक्ये पुरुषापेक्षा । स्वयंप्रत्ययो ह्यसौ निरपेक्षप्रत्यय इत्यर्थः । बादरायणपद-प्रयोजनमाह——बादरेति ॥

इदमत्रावधेयम्——श्रुतिः द्विविधा चोदनाश्रुतिरभिधाश्रुतिश्चेति । अत्र सूत्रे श्रुतिमात्रस्य निरपेक्षं प्रामाण्यमुक्तम् । धर्मे तु चोदनैव प्रमाणमित्युच्यते । किं कारणमिति चेत्——असति विधौ विप्रकृष्ट-स्वर्गादिबाधेन समानपदश्रुत्या धात्वर्थ एव भावनांशे निपतेत् । अतो यागादेर्न समीहितसाधनत्वं स्यात् । विधौ च सति तेन पुरुष-प्रवर्तनात्मकेन समानप्रत्ययोपात्तेन समीहितसाधनत्वाक्षेपकेण धात्वर्थादपि सन्निकृष्टतरेण अवरुद्धा भावना धात्वर्थमुल्लङ्घ्य विप्रकृष्टमपि स्वर्गादिकमेव भाव्यतया च गृह्णाति साधनतया च यागादिकमिति सिध्यति । यागादेश्श्रेयस्साधनतया धर्मत्वमपि सिध्यतीति ॥

अथौपवर्षं व्याख्यानं वृत्त्यपरपर्यायमनुसृत्य सूत्रत्रयमन्वयं व्याख्याति——वृत्तिकारस्त्वित्यादिना आत्मवादसमाप्तिपर्यन्तेन संदर्भेण ॥

परीष्टिरित्येवमादिम् । न परीक्षितव्यं निमित्तम् । प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि । तदन्तर्गतं च शास्त्रं, अतस्तदपि न परीक्षितव्यम् ॥

अत्रोच्यते—व्यभिचारात्परीक्षितव्यम् । शुक्तिका हि रजतवत्प्रकाशते यतः । तेन प्रत्यक्षं व्यभिचरति । तन्मूलत्वाच्चानुमानादीन्यपि । तत्रापरीक्ष्य प्रवर्तमानोऽर्थाद्विहन्येत । अनर्थं चाप्नुयात्कदाचित् ॥ नैतदेवं यत्प्रत्यक्षं न तद्व्यभिचरति । यद्व्यभिचरति न तत्प्रत्यक्षम् ॥ किं तर्हि प्रत्यक्षम्[१]—तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम् ॥ (सूत्रम् ४)

"न परीक्षितव्यमित्यादि न परीक्षितव्यम्" इत्यन्तो ग्रन्थः नञध्याहारेण तस्य निमित्तेति सूत्रस्य व्याख्यानम् । सर्वेषामपि प्रमाणानां प्रसिद्धत्वात् चोदनारूपं शास्त्रमेव धर्मे प्रमाणमिति सिद्धमेवेति भावः ॥

अथ प्रत्यक्षज्ञानस्य भ्रान्तिज्ञानाद्विविक्तं लक्षणमजानन् उभयोरक्षजत्वेन भ्रमस्यायथार्थत्वलक्षणे व्यभिचारे सति प्रत्यक्षस्यापि तत्संभवं मत्वा परीक्षां चोदयति—अत्रोच्यते इत्यादिना ॥ व्यभिचाराभावात्प्रत्यक्षं न परीक्षितव्यमिति परिहरति—नैतदेवमित्यादिना ॥ किं पुनः प्रत्यक्षस्याभासासंकीर्णं लक्षणमित्याशङ्कापूर्वकं प्रत्यक्षसूत्रमवतारयति किं—तर्हीति ॥ अत्रैतावदेव सूत्रम् । अनिमित्तमित्यादिकं तु सूत्रान्तरम् । अत्र सत्तच्छब्दयोर्व्यत्ययेन वा सच्छब्दं शोभनार्थं मत्वा तच्छब्दाध्याहारेण वा संपूर्णं लक्षणमाह—तत्संप्रयोग इति ॥ तत्पदं ग्राह्यपरम् । ग्राह्यसंप्रयोग आभासे नास्तीति नातिव्याप्तिः । शिष्टं पूर्ववत् ॥

आभासस्यान्यसंप्रयोगजत्वं दुर्ज्ञानं अन्योन्याश्रयादिदोषादिति-

यद्विषयं ज्ञानं तेनैव संप्रयोगे इन्द्रियाणां पुरुषस्य बुद्धि-जन्म सत्प्रत्यक्षम् । यदन्यविषयं ज्ञानं अन्यसंप्रयोगे भवति न तत्प्रत्यक्षम् ॥

कथं पुनरिदमवगम्यते—इदं तत्संप्रयोगे इदमन्यसंप्रयोगे इति । यन्नान्यसंप्रयोगे, तत् तत्संप्रयोगे । एतद्विपरीतमन्यसंप्रयोग इति कथं ज्ञेयम् ! यत् शुक्तिकायामपि रजतं मन्यमानो रजतस-निकृष्टं मे चक्षुरिति मन्यते ॥

बाधकं हि यत्र ज्ञानमुत्पद्यते नैतदेवं मिथ्याज्ञानमिति तत् अन्यसंप्रयोगे । विपरीतं तत्संप्रयोगे इति ।' प्राक् बाधक-ज्ञानोत्पत्तेः कथमवगम्यते ? यदा न तत्काले सम्यग्ज्ञा-नस्य मिथ्याज्ञानस्य वा न कश्चिद्विशेष ॥ यदा हि चक्षुरा-दिभिरुपहतं मनो भवति इन्द्रियं वा तिमिरादिभिः सौक्ष्म्या-

शङ्कते—कथं पुनरिति ॥ एतद्विपरीतमिति ॥ यत् तत्संप्रयोगे तत् नान्यसंप्रयोगे इति कथमवगम्यत इत्यर्थः । तत्संप्रयोगजत्वज्ञानमन्य-संप्रयोगजत्वाभावज्ञानाधीनम् । अन्यसंप्रयोगजत्वाभावज्ञानं च तत्संप्रयो-गजत्वज्ञानाधीनमिति भवत्यन्योन्याश्रयदोष इति भावः । विपरीतानुभवं बाधकमप्याह—यच्छुक्तिकायामिति ॥

उत्तरकालीनबाधकज्ञानात् तत् सुज्ञानमिति समाधत्ते—बाधकमिति ॥ बाधकज्ञानाभावे तत्संप्रयोगजत्वं ज्ञायत इति नान्योन्यसंश्रयः । विप-रीतानुभवोऽपि बाधकज्ञानावधिक एवेति न कश्चिद्दोष इति भावः । अथ यत्र दिङ्मोहादौ स्वारसिकं बाधकज्ञानं नोत्पन्नं तत्र कथं निर्णय इत्याशङ्कते—प्रागिति ॥ तत्रापि कारणदोषज्ञाने सति लौकिकं बाधकज्ञानं, तेन चावगम्यते मिथ्यात्वमिति समाधत्ते— यदाहीति ॥

दिभिर्बाह्यो वा विषयः ततो मिथ्याज्ञानम् । अनुपहतेषु हि सम्यक् ज्ञानम् । इन्द्रियमनोऽर्थसन्निकर्षो हि सम्यग्ज्ञानस्य हेतुः । असति तस्मिन् मिथ्याज्ञानम् । तदुभयत्रैव दोषो मिथ्याज्ञानस्य हेतुः । दुष्टेषु हि ज्ञानं मिथ्या भवति । कथमिदमवगम्यते? दोषापगमे संप्रतिपत्तिदर्शनात् ॥

कथं दुष्टादुष्टावगम इति चेत्—प्रयत्नेनान्विच्छन्तो नचेद्दोषमवगच्छेमहि प्रमाणाभावाददुष्टमिति मन्येमहि । तस्माद्यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्य इति ॥

चक्षुरादिभिर्मनस उपहतिर्नाम विलक्षणवस्तुदर्शनादिना मनसो व्याकुलता । यद्वा—वक्ष्यमाणदिशा निद्रया मनसोऽनवसाद । तदुभयेति ॥ इन्द्रियं विषयश्च । दोषस्य मिथ्याज्ञानहेतुत्वमन्वयव्यतिरेकाभ्यां द्रढयति—दुष्टेषुहीति ॥ प्रश्नपूर्वकं व्यतिरेकमाह—कथमिदमिति ॥ सम्प्रतिपत्तिदर्शनात् संशयादेरभावादिति भाव. ॥

दुष्टादुष्टावगमोपायं प्रदर्शयति—कथंदुष्टेति ॥ दोषस्सदुपलम्भकप्रमाणगम्यः तदभावः अनुपलब्धिगम्यः इति विवेकः । तस्मात् दोषादोषोपलम्भकप्रमाणसंभवादित्यर्थ । यस्य च दुष्टंकरणमिति ॥ यौक्तिको बाधनिश्चय इति यावत् । मिथ्येति प्रत्ययः स्वारसिको बाधनिश्चय इत्यर्थः । ताभ्यां च भ्रमप्रमाविवेक इति भावः ॥

अथ निरालम्बवादः-

एवं बाधितत्वाबाधितत्वाभ्यां प्रत्यक्षस्य तदाभासस्य च प्रामाण्यमप्रामाण्यं चोपपादितम् । अथ यौक्तिको बाधनिश्चय सर्वत्र भवितुमर्हतीत्यभिप्रायेण निरालम्बवादमुपन्यस्यति—ननु सर्व एवेति ॥

ननु सर्व एव निरालम्बनः प्रत्ययः । प्रत्ययस्य हि निरालम्बनतास्वभाव उपलक्षित स्वप्ने । जाग्रतोऽपि स्तम्भ इति वा कुड्य इति वा प्रत्यय एव भवति । तस्मात् सोऽपि निरालम्बन ॥

अत्र प्रथमं वाक्यं प्रतिज्ञा । साध्यव्याप्तहेतुनिदर्शनात् द्वितीयमुदाहरणम् । उदाहरणोपदर्शितसाध्यनियमस्य हेतो साध्यधर्मिण्युपसंहारात् तृतीयमुपनय । अनेनैव वाक्येन प्रत्ययत्वं हेतुरित्यप्युक्त भवति । नास्ति हि नियम पञ्चम्यैव हेतु. निर्देष्टव्य इति । उदाहरणोपनयनिगमनैरपि ह्यविकलमेव साधनम् । तस्मात्सोऽपीति तुरीयं निगमनमिति विभाग । अत्र सर्वशब्द जाग्रद्बुद्धिसामान्यपर अपरथा अंशे सिद्धसाधन दृष्टान्ताभावश्च स्याताम् । धर्मवचनमपि निरालम्बनपदं बाह्यालम्बनपरम् । अपरथा बौद्धस्य स्वाभ्युपगतस्वांशालम्बनविघातस्स्यादिति ॥

इदमत्रावधेयम् — सोऽयमर्थापह्नववादो विज्ञानवादः योगाचारसम्मतः । यदाहुः—

> द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
> लोके संवृतिसत्य च सत्य च परमार्थतः ॥

इति । अर्थशून्य विज्ञानमेव परमार्थसत् । बाह्यार्थास्तु स्वाप्नार्थकल्पाः । ज्ञानानामेव साकाराणां अर्थवत् स्वयमेव विचित्रत्वात् नार्थवैचित्र्यकृतं विज्ञानवैचित्र्यम् । तच्च वैचित्र्यं वासनावशादेवोपपद्यते । वासना च विलक्षणप्रत्ययप्रवाह एव । कथ महीमहीधरादीनां बाह्यवस्तूनामाकारः आन्तरस्येत्युच्यते ? इत्थम्—अर्थस्यापि व्यवहारयोग्यत्वं ज्ञानप्रकाशायत्तम् । अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गात् । प्रकाशमानस्य साक्षा-

रत्वमवश्याश्रयणीयम् । निराकारस्य प्रकाशायोगात् । एकश्चायमाकार उपलभ्यमानः ज्ञानस्यैव । तस्य बहिर्वदवभास भ्रमकृत ॥

किंच बाह्यार्थमभ्युपेयद्भिरपि घटपटादिविज्ञानेषु ज्ञानस्य तत्तदर्थासाधारण्यं तत्तदर्थसारूप्यमन्तरेण नोपपद्यते इत्यवश्यं ज्ञानेऽर्थसरूप रूपमास्थेयम् । तावतैव सर्वव्यवहारोपपत्ते तद्व्यतिरिक्तबाह्यार्थकल्पना निष्प्रमाणकेति विज्ञानवादसाराशः ॥

एतमर्थापह्नववाद भाष्यकारो निरालम्बनवादेन शून्यवादेन चोपन्यस्य निराचष्टे । स च शून्यवादः न माध्यमिकसम्मत सर्वशून्यवाद. । अपितर्हि बाह्यार्थशून्यवाद एव । स्फुटीभविष्यत्येतदुत्तरत्र ॥

एव तर्हि भाष्यकारस्य माध्यमिकमतानिराकरणनिबन्धनन्यूनता कथ परिहर्तव्या ? इत्थ परिहर्तव्या—माध्यमिकमतस्था अपि प्रथम अर्थमपह्नुत्य निर्विषयज्ञानानुपपत्ते विज्ञानमप्यपह्नुवते । तत्रार्थापह्नवस्य द्वयसाधारणत्वात् ज्ञानापह्नववादस्य तन्मूलस्य तन्निराकरणेनैव निराकरणसिद्धे न न्यूनतेति ॥

सोऽय बाह्यापलापः प्रमाणमूलक. प्रमेयमूलकश्चेति द्विविध. प्रथमोऽपि द्विविधः तत्र आद्योऽनुमानेन बाह्यार्थापलापो निरालम्बनवाद । अनन्तरः प्रत्यक्षशक्तिनिरूपणेन तदपलापः शून्यवाद इति विवेकः । द्वितीयोऽपि शून्यवादान्ते विविच्यते ॥

अस्मिन् शास्त्रे बाह्यार्थापह्नववादानिरासनिदानमेतत्—यदि सर्वा बुद्धयो बाह्यार्थशून्याः स्वांशपर्यवसायिन्यो भवेयु. तदा योऽय—चोदना प्रमाण अन्यदप्रमाणं, तत्संयोगज प्रत्यक्षं अतत्सयोगज आभास, ज्योतिष्टोमादि पुण्यं ब्रह्महत्यादि पापं, अभ्युदय प्रत्यवायश्च फलं, विधेरर्थ प्रवर्तनं अर्थवादस्य प्ररोचन मन्त्राणामनुष्ठेयार्थप्रकाशन नामधेयानां गुणफलविधानार्थत्वविचारः, स्मृत्याचारप्रामाण्याप्रामाण्यविचारः,

उच्यते स्वप्न इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यतीति । स्वप्नेप्येवमेव सुपरिनिश्चिता आसीत् प्राक्प्रबोधनात्, न तत्र कश्चिद्विशेष इति । न—स्वप्ने विपर्ययदर्शनात् । अविपर्ययाच्चेतरस्मिन् ॥ तत्सामान्यादितरत्रापि भविष्यतीति

कर्मभेदशेषत्वक्रमनियमा , वचनव्यक्तिभेदेन वाक्यार्थचिन्ता, कर्माणि कानिचित् आमुष्मिकस्वर्गादिफलानि कानिचित् अनियतफलानि, कानिचिदैहिकवृष्ट्यादिफलानि, इत्यादि व्यवहारः, स सर्वः चोदनादीनामभावात् अयुक्तः स्यात् अतोऽवश्य धर्मार्थिभि पुरुषैः बाह्यार्थसद्भावे यत्न कर्तव्य इति ॥

सिद्धान्तमाह —उच्यत इति ॥ अत्र सुपरिनिश्चितत्वं अबाधितत्वम् । तच्च न सालम्बनत्वे हेतुत्वेनोक्तम् । किन्तु सुपरिनिश्चिता-प्रत्यक्षादिरूपा बुद्धिः प्रबला बाह्य सुपरिनिश्चितं व्यवस्थापयन्ती तदभावप्रतिज्ञां बाधते इत्यभिप्रायेणोक्तम् ॥

अथ स्वाप्नप्रत्ययस्यापि कालभेदेन व्यक्तिभेदात् सुपरिनिश्चिततत्वलक्षणमबाधितत्वं प्राक्प्रबोधादस्तीति सत्यमिथ्याप्रत्यययोः अविशेष इत्याशङ्क्य समाधत्ते— स्वप्नेपीत्यादिना ॥ प्रागविशेषेपि पश्चाद्विपर्ययलक्षणबाधदर्शनादर्शनाभ्यां विशेषोऽस्तीत्यर्थः । यद्देशकालावच्छेदेन यः प्रतीयते तद्देशकालावच्छेदेनैव तस्य विपर्ययः प्रतीयत इति प्रागविशेषोऽकिंचित्कर इति भावः ॥

स्वाप्नप्रत्ययसामान्यात् जाग्रत्प्रत्ययोपि भविष्यति काले न कथं विपर्येतु, न वा तत्र कथं मिथ्यात्वमित्याशङ्कते—तत्सामान्यादिति ॥ भविष्यतीति ॥ मिथ्याभाव इति शेषः । तत्र सामान्यपदेन विवक्षितं मिथ्याभावप्रयोजकं किं प्रत्ययत्वं, अथ प्रतीतिरेव वेति संभाव्य प्रयो-

चेत्—यदि प्रत्ययत्वात्स्वप्नप्रत्ययस्य मिथ्याभावः जाग्रत्प्रत्ययस्यापि तथा भवितुमर्हति। अथ प्रतीतिस्तथाभावस्य हेतुः, न शक्यते प्रत्ययत्वादयमन्य इति वक्तुम्। अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावः विपर्ययादवगतः। कुत इति चेत्—सनिद्रस्य मनसो दौर्बल्यात् निद्रा मिथ्याभावस्य हेतुः स्वप्नादौ स्वप्नान्ते च। सुषुप्तस्याभाव एव। अचेतयन्नेव हि सुषुप्त इत्युच्यते। तस्माज्जाग्रतः प्रत्ययो न मिथ्येति॥

ननु जाग्रतेऽपि करणदोषस्स्यात्। यदि स्यादवगम्येत।

जकान्तरं निष्कृष्य दर्शयन् समाधत्ते—यदीति॥ यदि प्रत्ययत्वादित्यादि प्रथमसभ वनाविषयानुवाद । अथप्रतीतिरित्यादि द्वितीयसंभावनाविषयानुवाद.। द्वितीयोपि पूर्वस्मादनतिरिक्त इत्याह—न शक्यत इति॥ अयमन्य इति प्रयोजकाभिधानहेतुपददृष्टेच्या पुलिङ्गता। निष्कृष्टार्थमाह—अन्यतस्त्विति॥ तत्र प्रमाण विपर्ययादिति॥ अन्यशब्दार्थ निद्रालक्षण प्रश्नपूर्वक विशदयति—कुत इति चेदिति॥ निद्रा सकलबाह्येन्द्रियोपरम.। स च मानसोपहतिद्वारा मिथ्याभावप्रयोजक इत्यर्थ.। स्वप्नान्तं स्वप्नमध्यं स्वप्नस्वप्नमपीति यावत्। सुषुप्तस्य सर्वेन्द्रियोपरातिलक्षणसुषुप्त्यवस्थाविशिष्टस्य पुरुषस्य अभाव एव सदुपलम्भकप्रमाणसामान्याभाव एव। मिथ्याभावहेतुरिति शेषः। अप्रामाण्यं विपर्ययस्संशयो ज्ञानाभाव इति हि त्रिविधमुक्त, तत्र ज्ञानाभावलक्षणमिथ्यात्व कारणाभावानिबन्धनमिति भाव.। सुषुप्त्यवस्थां विशदयति—अचेतयन्नेवहीति॥ उपसंहरति—तस्मादिति॥ वह्न्यानुष्णानुमानवत् निरालम्बनानुमान प्रत्यक्षबाधितमिति भावः॥

पूर्ववदत्रापि यौक्तिकं बाधदर्शनमाशङ्क्य समाधत्ते—नन्वित्यादिना॥

**स्वप्नदर्शनकालेऽपि नावगम्यत इति चेन्न। तत्र प्रबुद्धो ह्यव-गच्छति निद्राक्रान्तं मे मन आसीदिति ॥**

यदिस्यादिति ॥ अभावप्रमाणेन दोषाभावनिश्चय इत्यर्थः । तत्र प्रतिबन्दीं विशेषप्रदर्शनेन निराकरोति —स्वप्नेति ॥

किं नाम स्वाप्नतत्त्वमिति चेत् —बाह्यमेव हि तत्त्व देशान्तरे कालान्तरे वाऽनुभूत स्वप्ने स्मर्यमाण दोषवशात् सन्निहितदेशकाल-वत्तयाऽवगम्यते । यथा अनन्तरादिवसानुभूतस्य स्वप्ने वर्तमानवदव-गमात् स्मृतिरेव तावत्स्वप्नमिति निश्चीयते तथाऽन्यत्रापि स्मृतित्वमेव युक्तम् । ततश्चास्मिन् जन्मनि अननुभूतस्यापि स्वप्ने दृश्यमानस्य जन्मान्तरानुभव कल्प्यत इति ॥

एव जाग्रद्विभ्रमाणामपि सालम्बनतैव । तथाहि अलातचक्र-विभ्रमे अन्यत्र विद्यमानेनैव चक्रादिरूपेण विद्यमानमेवालातादिक शीघ्र-भ्रमणादिदोषवशात् ससृष्टमवगम्यते । गन्धर्वनगरे पूर्वदृष्ट हर्म्यादिक वलाहकादिक च प्रसिद्धम् । मृगतोयविभ्रमे पूर्वानुभूतमुदकं रश्मितप्त-मूषर च प्रसिद्धमेव । शशविषाणस्थले शशः विषाण च प्रसिद्धम् । शशविषाणं नास्तीति निषेधविभ्रमे शशस्य शिर तस्य च मौण्ड्य निमित्तम् । चैत्रशून्य गृहमिति शून्यधियस्तु वस्त्वन्तरैकससृष्ट गृहा-दिक निमित्तम् । "अङ्गुल्यग्रे हस्तियूथशतमास्ते" इत्यादिवाक्यज बुद्धेरपि पदार्था एव पदसन्निधिदोषवशात् मिथस्संसृष्टतयाऽवभासमाना आलम्बनम्। सन्निहितवर्तमानविषयत्वनियम प्रत्यक्षस्य धर्म । नत्वा-भासस्य । तस्माद्देशकालान्तरे विद्यमानमप्यालम्बन भविष्यतीति सिद्धान्तः ॥

एतदुक्तं भवति–सर्व हि वस्तु सदसदात्मकम् । तत्र शुक्तिकार-

जतादिज्ञान शुक्तिकाख्य भाव शुक्तिकारूपेण सन्त भावान्तरस्य रजतस्य यत्सद्रूप रजतरूप तेन रूपेण गृह्णातीति भ्रान्त भवति। नेद रजतमिति रभावज्ञानं शुक्तिकारूपेण सन्तमेव भाव रजतस्य यदसद्रूप तेनात्मना गृह्णाति अभावालम्बनमभ्रान्त भवति। तेन भ्रान्तिज्ञान अभावालम्बन च अन्यथा सन्तमन्यथा प्रतिपद्यते। तत्र भ्रान्तिज्ञानस्य सद्रूपेणान्यत्प्रतिपद्यते । अभावज्ञानस्य तु असद्रूपेणान्यत्प्रतिपद्यते इत्येव विशेष ।

तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते
तन्निरालम्बन ज्ञान अभावालम्बन च तत् ॥ इति ॥

अथ च केचनानुमानदोषा: प्रदश्यन्ते—निरालम्बनसिद्धान्ते धर्मधर्मिविषयकस्य वक्तृश्रोत्रो प्रत्ययस्य निरालम्बनत्वेन धर्मधर्मिणो. बाधात् स्ववचनविरोधो नाम प्रतिज्ञादोष " माता मे वन्ध्या " इति वाक्यवत्।

अथ सर्व कल्पितत्वेनोपपद्यते कल्पितत्व च असत्त्व तुच्छत्वमिथ्यात्वाभावत्वशून्यत्वाद्यपरपर्यायम्। तद्विषय च ज्ञानं कल्पनेति चेत् तस्य ज्ञानविषयत्वे अर्थक्रियालक्षण सत्त्वमेव स्यान्न त्वसत्त्वम् ॥

अपि च—धर्ममपाख्याते सूत्रे बाह्यार्थसद्भाव बुद्धेनोपदिष्ट इत्यागमबाधितमनुमानम्। विज्ञानास्तित्वाभिन्नत्वक्षणिकत्वादिबुद्धय. समीचनाश्चेत् तत्र व्यभिचार । असमीनाश्चेत् अस्माकमेव विजय ॥

ननु यथैवाविद्यमानैरेव बुद्ध्यारूढै. घटपटादिभि उदकाहरणादिव्यवहार. सुखोपभोगश्च स्वप्ने सिद्ध्यति तथैव बुद्ध्यारूढेन धर्मधर्मिहेत्वादिविभागेन अनुमानानुमेयव्यवहारः सेत्स्यति किं बाह्येन। तथाचोक्त दिङ्नागेन "सर्व एवायमनुमानानुमेयव्यवहार बुद्ध्यारूढेन धर्मधर्मिन्यायेन। न बहिस्सत्तामपेक्षत" इति। नैवं—अत्यन्तासति निर्वस्तुके जगति शशशृङ्गादाविव बुद्ध्यादिनिबन्धन विभागो नैव सम्भवतीति यत्किंचिदेतत ॥

ननु असत्यादपि सत्यासिद्धिर्लोके दृष्टा। यथोक्तं धर्मकीर्तिना—

मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतो.।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रिया प्रति ॥

तत्र मणिप्रभायां मणिबुद्ध्या मणिलाभात् असत्यात्सत्यसिद्धिरिति। अपि च बाष्पादपिहि वह्निसिद्धि। रेखादिभिः वर्णबुद्धि। तत्र बाष्परेखादिक धूमवर्णादिरूपेणापरमार्थमेव सत् परमार्थवह्निवर्णादिबुद्धिं जनयतीति ॥

तदसत्—बाष्परेखादिक हि स्वरूपेण सत्यभूतेन पररूपेण वा धूमवर्णादिरूपेणासत्येनावगम्यते। यत्तु स्वरूपेणैवात्यन्ताविद्यमान न तत् स्वरूपेण प्रमाण नापि पररूपेण भ्रान्त्याऽवगम्यते। न हि शशशृङ्गादिक स्वरूपेण पररूपेण वाऽवगम्यमानं दृष्टम्। तस्मान्नोपायस्यात्यन्तासत्यत्वम्। रेखास्वरूपे वर्णस्वरूपावगतिस्तु सम्बन्धग्रहणसमयवर्तितादात्म्यशिक्षानिबन्धना भ्रान्तिरेव। अत्यन्तासत सांवृतिक सत्यत्वमिति तु वाङ्मात्रमेव। किंच—मिथ्यावचनीय संवृतिशब्द' सौगतैस्स्वनास्तिक्यपरिहाराय लोकं वञ्चयितु प्रयुक्तो गलायामिव वक्रासव: शब्द इति वदन्ति ॥

ननु यद्वन्मया साधन नेष्यते तद्वत् त्वदीय दूषणमपि नेष्यते ततश्च दूषणाभावात् अदुष्ट साधनमिति चेत्—तर्हि दूषण नैव क्रियते साधनाभावस्त्वयैवाङ्गीकृत., ततश्च स्वपक्षासिद्धिरिति सक्षेप. ॥

अथ शून्यवाद

अत्र वादे "शून्यस्तु" इत्युपक्रममात्रेण सर्वशून्यवादिनो माध्यमिकमत निरस्यत इति प्रायो भ्राम्यन्ति। तदसत्—बाह्यार्थापह्नववाद एवात्रापि निराक्रियते। तथाहि "तस्मात् जाग्रत. प्रत्ययो न मिथ्या" इति प्रत्यक्षज्ञानबाधेन प्रागनुमान निरस्तम्। तस्य

**शून्यस्तु । कथम् ? अर्थज्ञानयोराकारभेदं नोपलभामहे । प्रत्यक्षा च नो बुद्धिः, अतः तद्भिन्नमर्थरूपं नाम न किंचिदस्तीति पश्यामः ॥**

च प्रत्यक्षादिप्रत्ययस्य बहिःप्रवर्तितुमशक्ते स्वांशपर्यवसायित्वात् न तद्विरोधोऽनुमानस्य संभवतीति पूर्वोक्तबाधपरिहारेण प्रत्यवस्थीयते—शून्यास्त्विति ॥ अत्र प्रकृतः प्रत्ययशब्दोऽनुवर्तते विशेष्यवाचकः । तुरवधारणे । तथाच प्रत्ययं प्रत्यक्षादि बाह्यार्थशून्य एव । इत्थं च बाधज्ञानं भ्रम इति नानुमानबाध इति भावः । प्रत्यक्षस्य बहिःप्रवर्तितुमशक्तिं परीक्षापूर्वकं निरूपयति—कथमर्थेति ॥ प्रत्यक्षा च नो बुद्धिरिति ॥ अस्माकं बुद्धिः स्वप्रकाशेत्यर्थः ॥

अयं भावः—सर्वप्राणभृतामविवादसिद्धमिदं यन्नीलाद्याकारं वस्तु प्रकाशते इति, तच्चैकमेव नीलाद्याकारं न द्वयमिति च । नायमाकारः अर्थज्ञानयोरन्यतरधर्मतया निर्धारितो भासते । तेन यदि परीक्षमाणाः ज्ञानमेवाकारवदित्यध्यवस्याम, ततः तन्मात्र एव प्रत्यक्षादिप्रमा क्षीणेति अर्थकल्पनां विजहीमः । ज्ञानस्य स्वयंप्रकाशमानस्य नार्थमन्तरेणानुपपत्तिरिति सिध्यत्यद्वैतम् । अथ तु बाह्यमेवेदमाकारवत्तया प्रकाशमानत्वादस्ति । तस्य च जडत्वेन पराधीनप्रकाशत्वात् तत्प्रकाशोपपत्तये ज्ञानमपि कल्पयितव्यमिति सिध्यति द्वैतम् ॥

तदाह—अतस्तद्भिन्नमिति ॥ तत्रैकमेव नीलाद्याकारं वस्तु प्रकाशत इति सिद्धे अर्थस्य बाह्याकारत्वे तस्य जडस्य ग्राह्यत्वासिद्धये ग्राहकं ज्ञानं तस्याप्याकारवत्त्वं च अङ्गीकर्तव्यमिति गौरवम् । लाघवात् ज्ञानस्यैवायमाकार इति वक्तुं युक्तम् । ततश्च ज्ञानमात्रमेव तत्त्वम् । तस्य संविन्मात्ररूपत्वेऽपि अनादौ संसारे विचित्रग्राह्यग्राहकाकारबुद्धि-

जन्याभिः विचित्राभिर्वासनाभि. जन्यमानस्य स्वहेत्वानुरूप्येण विचित्र-ग्राह्यग्राहकाकारशवलितस्य विभक्तस्य विचित्रस्य उत्पत्तिसिद्धे न वैचित्र्यसिद्धयेऽपि बाह्यापेक्षा सम्भवतीति भाव । यथाऽऽहु —

अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनै ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥
परिच्छेदान्तराच्चाय भावो बहिरिव स्थितः ।
ज्ञानस्याभेदिन भेदप्रतिभासोऽप्युपप्लव. ॥

इति । बुद्ध्यात्मा विज्ञानस्वरूपमित्यर्थ । विपर्यासितेति । भ्रान्तिदर्शनै-रित्यर्थः । तत्र वैभाषिकमत दृष्टान्तमाह—परिच्छेदेति । ज्ञानस्या-भेदिन ज्ञानस्यैवैकस्य तत्त्वस्य परिच्छेदान्तराद् ज्ञानव्यक्त्यन्तरात् अय भावः इयं ज्ञानव्यक्ति' बहिरिव स्थित' बाह्य वस्त्विव भासते । तस्माद् भेदप्रतिभास बाह्यवस्तुत्वेन प्रतिभास. उपप्लव भ्रान्तिरित्यर्थ । वैभाषिकास्त्वित्थमाहु —" सत्य ग्राहकाद्भिन्नमेव ग्राह्य, तत्तु ज्ञानमेव वाऽतीत नार्थ " इति ॥

अपि चार्थं कल्पयतामपि ज्ञानानामाकारकल्पना आवश्यकी । तथाहि—संविन्मात्ररूपं ज्ञान नीलादिकमर्थविशेष स्वास्मिन् विशेषं विना न शक्नोत्युपस्थापयितुम् । तदाह—

तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः ।
भाव्य तेनात्मना येन प्रतिकर्म विभज्यते ॥

इति । प्रतिकर्म प्रतिविषयमित्यर्थः । अर्थविशेषविषयत्वसिद्धये नीलादि-राकारो ज्ञाने स्वीकर्तव्य । नान्यथा विशेषावगम इत्यर्थ' ॥

तदेव प्रयोगा —नीलरूप नीलवेदनादभिन्न तदुत्पत्तौ संवेद्य-मानत्वात् तत्स्वरूपवत् । तद्भिन्नत्वेनासंवेद्यमानत्वाद्वा तत्स्वरूपवदिति । तदनेन सवेदनात् " इति बौद्धोक्त हेतुः दर्शितः । अपरोऽपि हेतुः

ग्राह्यलक्षणयोग. । ग्राह्यलक्षण ग्राह्यतारूप सबन्ध इत्यर्थ । ग्राह्यलक्षणश्च तादात्म्यम् । अन्यस्य सर्वस्यापि योगस्यासभवत् । ज्ञानार्थयोस्तादात्म्ये सति अर्थो विलीन एव । ज्ञानमेव विलीयतामिति चेत् अर्थस्य जडत्वेन प्रकाशायोगात् व्यवहारविलयस्स्यात् । तथा च सर्वा बुद्धयः स्वात्मानमेवानुभवन्ति स्वयमेव चानुभूयन्ते न बुद्ध्यन्तरेण । तथाहुः—

—नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्या नानुभवोऽपर ।
ग्राह्यग्राहकवैधुर्यात्स्वय सैव प्रकाशते ॥

इति । तथाहि न ह्यगृहीत प्रकाशयति दीपप्रभावादिति । तदाहुः—

"अप्रत्यक्षोपलंम्भस्य नार्थदृष्टि प्रसिध्यति ।
अविशेषोऽन्यथा स्वीयपरकीयोपलम्भयोः ॥

अप्रत्यक्षोपलम्भस्येत्यत्र कर्मधारयसमास । बहुव्रीहिसमासत्वे उपलम्भातिरिक्तस्यान्यपदार्थस्य पुरुषस्यानभ्युपगमादसगतिस्स्यात् । अर्थ दृष्टि. व्यवहारयोग्यतेत्यर्थ. ॥

अपिच—

ज्ञानान्तरेणानुभवोऽनिष्ट तत्रापि हि स्मृति ।
विषयान्तरसंचार तदा न स्यात्स चेष्यते ॥

अयमर्थ'—घटादीनामप्रकाशात्मना हि प्रकाशाय प्रकाशकापेक्षा युक्ता' । तस्य प्रकाशकस्य प्रकाशकान्तरापेक्षायामनवस्थितिः । ननु मा नाम संविदो ज्ञानमित्यत आह—तत्रापीति । उत्तरकाले स्मृतिदर्शनात्संविदनुभवोऽस्तीत्यर्थ । विषयान्तरसचारस्तथा न स्यादिति। ज्ञानसिद्धिं विनाऽर्थसिद्ध्यसंभवात् एकार्थविषयकप्रवाह एव आयुष. पर्यवसानात् विषयान्तरसचारानुपपत्तिरित्यर्थः । स चेष्यते, अन्यथा व्यवहारविरोध इति भावः । तस्माद्धीरद्वितीयाऽर्थशून्या स्वात्मन्येव पर्यवस्यतीति शून्यवादसारांश ॥

# क्रय्यसंस्कृतपुस्तकानि.

| | | |
|---|---|---|
| संस्कृतबालशिक्षा | ० | ३ |
| सरस्वतीप्रार्थना, श्यामला दण्डकं, नवरत्नमालाच | ० | २ |
| शब्दमञ्जरी (दृढपत्रात्मिका) | ० | ६ |
| यजुर्वेदसंध्यावन्दनम् | ० | २ |
| आदित्यहृदयम् | ० | १ |
| महाकवि बोधायनकृत-भगवदज्जुकनाटकम् | ० | ६ |
| शिवानन्दलहरी | ० | २ |
| रुद्रनमकचमकम् | ० | २ |
| सौन्दर्यलहरी | ० | २ |
| पञ्चसूक्तानि | ० | २ |
| रामकर्णामृतम् | ० | ८ |
| बालरामायणम् | ० | २ |
| विवेकचूडामणि | ० | ८ |
| कृष्णकर्णामृतम् | ० | ६ |
| „ आंग्लवादासहितम् | १ | ८ |
| शिवकवचम् | ० | २ |
| यजुर्वेदाह्निकम् | ० | ६ |
| श्रीवैष्णवाह्निकम् | ० | ८ |
| सूर्यनमस्कारमन्त्रा ऋयुच-ब्रह्मयज्ञचाहितास्सस्वराश्च | ० | १ |
| लक्ष्मीनृसिंहस्तोत्रम् .... | ० | १ |
| श्रीगोविन्दद्वादश चतुर्दश मञ्जरिकास्तोत्रम् | ० | १ |
| मुकुन्दमाला .. | ० | १ |
| हिन्दी बालशिक्षा | ० | ३ |
| हिन्दी प्रथमवाचकम् | ० | ८ |
| भर्तृहरिशतकत्रय, मूलम् | ० | ८ |
| विक्रमार्कचरित्रम् | ० | १० |
| संस्कृतान्ध्रवर्णबोधिनी, पत्रफलका .. | ० | २ |
| श्रीलक्ष्मीनारायणहृदयं | ० | ३ |
| ब्रह्मसूत्राणि, मूलम् | ० | ३ |

॥ नामावळीसहितानि ॥

| | | |
|---|---|---|
| विष्णुसहस्रनामस्तोत्रम् | ० | ४ |
| ललितासहस्रनामस्तोत्रम् | ० | ६ |
| लक्ष्मीसहस्रनामस्तोत्रम् | ० | ४ |
| सुब्रह्मण्यसहस्रनामस्तोत्रं | ० | ४ |
| शिवसहस्रनामस्तोत्रम् | ० | ४ |
| वेङ्कटेशस्तोत्रम् .. | ० | ४ |
| अन्नपूर्णासहस्रनामस्तोत्रं | ० | ४ |
| आंजनेयसहस्रनामस्तोत्रं | ० | ४ |
| गणपतिसहस्रनामस्तोत्रं | ० | ४ |

वाविळ्ळ. रामस्वामिशास्त्रिलु अण्ड् सन्स्,
२९२, एस्प्लनेड् चेन्नपुरी

# YOUR LIFE-READING.

---

For one year in monthly details, Rs 2 The same for businessmen in weekly predictions for one year, Rs 8 General whole life-reading containing the results of every coming dasas and bhukthis, Rs 5 Whole life-reading in yearly future predictions, Rs 8 Particular good and bad days for one year for business undertakings, Rs 10 Data required —True copy of horoscope in any language or year month, day, place and hour of birth either according to Hindu or Western system

**PLEASE READ THE FOLLOWING FEW APPRECIATIONS —**

EXTRACT —**Dr Radhakumud Mookerji, M A, Ph D, University Professor, Lucknow, writes:**— Congratulate you on the accuracy with which you have calculated the events of my last year's life I am bringing your talents to the notice of some of my influential friends

**Lakshman Hanumanth Prabhu, Esq, B A, L L B. Vakil, Honnavar, (N K) writes** —I have great pleasure to recommend Mr B R Sreenivasaiya to the enlightened public as a trained and considerably accurate astrologer I consulted him taking thorough care to conceal my education and vocation But when I heard from him through post he could precisely give my vocation as well as education much to my amazement He gives reasons for every conclusion he arrives at

**Ananda Narain Sapru, Esq Balliol College, Oxford, writes** —I consulted you in April 1922, and you sent me an annual reading which was very satisfactory

**Shah Sarabhai Hathisingh, Esq Cotton Merchant, Ahmedabad, writes** — Glad to freely admit your esteemed abilities in Astrology Your weekly predictions and calculations have been confirmed

*Apply*·—

**B. R SREENIVASAIYA,**

**Dewan's Road, Mysore.**

# ವಿಶೇಷ ಸೂಚನಾ

1 ಮಹಾಪಾಠಶಾಲೆಯ ಪಂಚಾಶತ್ಸಂವತ್ಸರ ಮಹೋತ್ಸವದ ಜ್ಞಾಪಕಾರ್ಥವಾದ ಸಂಚಿಕೆಯು ಪ್ರತ್ಯೇಕ ಬಿಕರಿಗೆ ಸಿದ್ಧವಾಗಿದೆ ಸುಂದರ ವಾದ ಐದು ಭಾವಚಿತ್ರಗಳಿಂದಲಂಕೃತವಾಗಿ ಉತ್ತಮವಾದ ಕಾಗದದಲ್ಲಿ ಮುದ್ರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಉದ್ದಾಮ ಪಂಡಿತರಿಂದ ರಚಿತಗಳಾದ ಉಪನ್ಯಾಸಗಳಿಂದ ಭರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಸರ್ವರೂ ಗ್ರಹಿಸತಕ್ಕು ದಾಗಿದೆ ಕೆಲವು ಪ್ರತಿಗಳು ಮಾತ್ರ ಉಳಿದಿರುವುದರಿಂದ ಇಷ್ಟವುಳ್ಳವರು ಶೀಘ್ರದಲ್ಲಿಯೇ ಕೆಳಗಿನ ವಿಳಾಸಕ್ಕೆ ಬರೆದು ಪಡೆಯಬಹುದು ಬೆಲೆ ಎಂಟಾಣೆ, ಅಂಚೆ ವೆಚ್ಚ ಎರಡಾಣೆ

2 ಇದುವರೆಗೂ ನಮ್ಮ ಪತ್ರಿಕೆಗೆ ಚಂದಾದಾರರಾಗುವುದರ ಮೂಲಕ ಪ್ರೋತ್ಸಾಹಕೊಟ್ಟ ಮಹನೀಯರಿಗೆ ಬಹಳ ಕೃತಜ್ಞರಾಗಿದ್ದೇವೆ ಮುಂದೆಯೂ ಹೀಗೆಯೇ ಸಹಾಯಮಾಡಿ, ಕ್ಷೀಣದಶೆಗೆ ಬರುತ್ತಿರುವ ಗೀರ್ವಾಣ ವಿದ್ಯೆಯನ್ನು ಕೈಲಾದಷ್ಟು ಉದ್ಧಾರಮಾಡಬೇಕಾಗಿ ಪ್ರಾರ್ಥನೆ

| | | | | |
|---|---|---|---|---|
| ಚಂದಾ—ಮೈಸೂರು ದೇಶದೊಳಗೆ | | 1 | 8 | 0 |
| ,, | ,, ಹೊರಗೆ | 1 | 12 | 0 |
| ,, | ಸೀಮೆಯಲ್ಲಿ | 3 ಷಿಲಿಂಗ್. | | |

ಚಕ್ರವರ್ತಿ ರಾಮಾನುಜಯ್ಯಂಗಾರ್ಯ,

ಅಧ್ಯಕ್ಷ,

ಸಂಸ್ಕೃತ ಮಹಾಪಾಠಶಾಲಾ, ಮೈಸೂರು

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिकायाः
विनिमयविषयीभूता एताः पत्रिकाः.

---

१ भंडारकर रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना
२ जर्नल् आफ् ओरियंटल् रिसर्च्, मद्रासु
३ प्रबुद्धकर्णाटक, बेंगळूरु
४ मिथिक् सोसैटि जर्नल्, बेंगळूरु
५ यूनिवर्सिटि यूनियन् म्यागसीन्, मैसूरु
६ एम् टि बि आर्ट्स्कालेजुम्याग्जीयन्, सूरत्
७ ओरियंटल् कालेजु म्यागसीन, लाहोर्
८ सद्बोधचन्द्रिके, आनन्दवन
९ श्री शारदा, शृंगेरि.
१० कादम्बरीसंग्रह, चामराजनगर
११ सनातनधर्मसंजीविनी, मैसूरु
१२. कर्णाटक चन्द्रिके, मैसूरु
१३. उद्यानपत्रिका, तिरुवाडि.

---

# सूचना

---

"मानमेयरहस्यश्लोकवार्तिकम्"

इति नाम कश्चिन्महाप्रबन्ध आनुष्टुभश्लोकरूपेण संगृहीतः सर्वसिद्धान्तसारसंग्रहरूप परस्सहस्रविषयविभक्तः एतत्पत्रिका-संपादकेन प्रणीत. मुद्रितः प्रकाशितश्चास्ति। मूल्यमस्य (७) षट् रूपकाणि प्रापणभृति पृथगेव

उपलब्धिस्थानं—पत्रिकासंपादकः.

---

## ಶ್ರೀ ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ (ಮಾಸಪತ್ರಿಕೆ).

---

ಈ ಪತ್ರಿಕೆಯು ಪ್ರಾರಂಭವಾಗಿ ಒಂಭತ್ತು ವರ್ಷಗಳಾದುವು. ಇದರಲ್ಲಿ ಪ್ರಕಟವಾಗತಕ್ಕ ವಿಷಯಗಳು ಅತ್ಯುತ್ಕೃಷ್ಟವಾದುವು ಸರ್ವರಿಗೂ ತಿಳಿಯುವಂತೆ ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಅನೇಕ ಪಂಡಿತರುಗಳಿಂದ ವಿಷಯಗಳು ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯಂತೆ ನಮ್ಮಲ್ಲಿ ಮತಪ್ರಕಾಶಕವಾದುದು ಮತ್ತಾವುದೂ ಇರುವುದಿಲ್ಲ ಇದರಲ್ಲಿ ಮಧ್ವಮತಕ್ಕೆ ಸಮ್ಬಂಧಿಸಿದ ವಿಷಯಗಳಲ್ಲದೆ, ಇತರ ಮತಗಳ ಪ್ರಮೇಯಗಳೂ, ನೀತಿ, ಧರ್ಮ ಪುರಾಣೇತಿಹಾಸಗಳಲ್ಲಿ ಕಂಡುಬರುವ ಅನೇಕ ವಿಷಯಗಳೂ ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯನ್ನು ಆದರಿಸುವಂತೆ ಸರ್ವರೂ ಪ್ರಾರ್ಥಿಸಲ್ಪಡುತ್ತಾರೆ

ಇದರ ವಾರ್ಷಿಕಚಂದಾ ರೂ ೨-೪-೦ (ಟಪ್ಪಾಲು ಸಮೇತ) ಪೋಷಕರು ೧ನೇ ತರಗತಿ ರೂ ೧೦-೦-೦ ೨ನೇ ತರಗತಿ ರೂ ೫-೦-೦ ಹಿಂದಿನ ಸಂಪುಟಗಳನ್ನಪೇಕ್ಷಿಸುವವರು ಬರೆದು ತರಿಸಿಕೊಳ್ಳಬಹುದು.

ಕೆ ವ್ಯಾಸಾಚಾರ್ಯ, ಬಿ.ಎ.,

ಕಾರ್ಯದರ್ಶಿ, ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ ಸಭಾ, ಮೈಸೂರು.